कुमुदैः पुण्डरीकैश्च शीतवारिधराः शिवा ।
नदीः पुष्करिणीश्चैव ददृशुः समलङ्कृताः ॥
आकाशनीकाशतटां नीपनीवारसकुलाम् ।
बभूव चरतां हर्षः पुण्यतीर्था सरस्वतीम् ॥
ते वै मुमुदिरे वीराः प्रसन्नसलिलां शिवाम् ।
पश्यन्तो दृढधन्वानः परिपूर्णां सरस्वतीम् ॥
तेषां पुण्यतमा रात्रिः पर्वसंधौ स्म शारदी ।
तत्रैव वसतामासीत्कार्तिकी जनमेजय ॥
पुण्यकृद्भिर्महासत्त्वैस्तापसैः सह पाण्डवाः ।
तत्सर्वं भरतश्रेष्ठाः समूहुर्योगमुत्तमम् ॥
तमिस्राभ्युदये तस्मिन्धौम्येन सह पाण्डवाः ।
सूतैः पौरोगवैश्चैव काम्यकं प्रययुर्वनम् ॥

# मत्स्योपाख्यानम्

(म० ३।१८५।२-५२)

मार्कण्डेय उवाच ।

विवस्वत. सुतो राजन्परमर्षि प्रतापवान् ।
बभूव नरशार्दूल प्रजापतिसमद्युतिः ।।
ओजसा तेजसा लक्ष्म्या तपसा च विशेषतः ।
अतिचक्राम पितर मनु. स्व च पितामहम् ।।
ऊर्ध्ववाहुर्विशालाया बदर्या स नराधिप' ।
एकपादस्थितस्तीव्र चचार सुमहत्तपः ।।
अवाक्शिरास्तथा चापि नेत्रैरनिमिषैर्दृढम् ।
सोऽतप्यत तपो घोर वर्षाणामयुत तदा ।।
त कदाचित्तपस्यन्तमार्द्रचीरजटाधरम् ।
वीरिणीतीरमागम्य मत्स्यो वचनमब्रवीत् ।।
भगवन्क्षुद्रमत्स्योऽस्मि बलवद्भ्यो भय मम ।
मत्स्येभ्यो हि ततो मा त्व त्रातुमर्हसि सुव्रत ।।
दुर्वल वलवन्तो हि मत्स्य मत्स्या विशेषत. ।
भक्षयन्ति यथा वृत्तिर्विहिता न सनातनी ।।
तस्माद्भयौघान्महतो मज्जन्त मा विशेपत ।
त्रातुमर्हसि कर्तास्मि कृते प्रतिकृत तव ।।
स मत्स्यवचन श्रुत्वा कृपयाभिपरिप्लुत ।
मनुर्वैवस्वतोऽगृह्णात्त मत्स्य पाणिना स्वयम् ।।
उदकान्तमुपानीय मत्स्य वैवस्वतो मनु ।
अलिञ्जरे प्राक्षिपत्स चन्द्रांशुसदृशप्रभम् ।।
स तत्र ववृधे राजन्मत्स्य परमसत्कृत ।
पुत्रवच्चाकरोत्तस्मिन्मनुर्भावं विशेपत. ।।
अथ कालेन महता स मत्स्य' सुमहानभूत् ।
अलिञ्जरे जले चैव नासौ समभवत्किल ।।

अथ मत्स्यो मनु ं दृष्ट्वा पुनरेवाभ्यभाषत ।
भगवन्साधु मेऽद्यान्यत्स्थान सप्रतिपादय ।।
उद्धृत्यालिञ्जरात्तस्मात्तत स भगवान्मुनि· ।
त मत्स्यमनयद्वापी महती स मनुस्तदा ।।
तत्र त प्राक्षिपच्चापि मनु परपुरजय ।
अथावर्धत मत्स्य स पुनर्वर्षगणान्वहून् ।।
द्वियोजनायता वापी विस्तृता चापि योजनम् ।
तस्या नासौ समभवन्मत्स्यो राजीवलोचन ।
विचेष्टितु वा कौन्तेय मत्स्यो वाप्या विशा पते ।।
मनु मत्स्यस्ततो दृष्ट्वा पुनरेवाभ्यभाषत ।
नय मा भगवन्साघो समुद्रमहिपी प्रभो ।
गङ्गा तत्र निवत्स्यामि यथा वा तात मन्यसे ।।
एवमुक्तो मनुर्मत्स्यमनयद्भगवान्वशी ।
नदी गङ्गां तत्र चैन स्वय प्राक्षिपदच्युत ।।
स तत्र ववृधे मत्स्य· किचित्कालमरिदम ।
तत पुनर्मनु दृष्ट्वा मत्स्यो वचनमब्रवीत् ।।
गङ्गाया हि न शक्नोमि वृहत्त्वाच्चेष्टितु प्रभो ।
समुद्र नय मामाशु प्रसीद भगवन्निति ।।
उद्धृत्य गङ्गासलिलात्ततो मत्स्य मनु स्वयम् ।
समुद्रमनयत्पार्थ तत्र चैनमवासृजत् ।।
सुमहानपि मत्स्य सन्स मनोर्मनसस्तदा ।
आसीद्यथेष्टहार्यश्च स्पर्शगन्धसुखश्च वै ।।
यथा समुद्रे प्रक्षिप्त स मत्स्यो मनुना तदा ।
तत एनमिद वाक्य स्मयमान इवाब्रवीत् ।।
भगवन्कृता हि मे रक्षा त्वया सर्वा विशेषत. ।
प्राप्तकाल तु यत्कार्य त्वया तच्छ्रूयता मम ।।
अचिराद्भगवन्भौममिद स्थावरजङ्गमम् ।
सर्वमेव महाभाग प्रलय वै गमिष्यति ।।
सप्रक्षालनकालोऽय लोकाना समुपस्थित ।
तस्मात्त्वा बोधयाम्यद्य यत्ते हितमनुत्तमम् ।।

त्रसाना स्थावराणा च यच्चेङ्ग यच्चं नेङ्गति ।
तस्य सर्वस्य सप्राप्तः कालः परमदारुणः ।।
नौश्च कारयितव्या ते दृढा युक्तवटाकरा ।
तत्र सप्तर्षिभिः सार्धमारुहेथा महामुने ।।
बीजानि चैव सर्वाणि यथोक्तानि मया पुरा ।
तस्यामारोहयेर्नावि सुसंगुप्तानि भागश ।।
नौस्थश्च मा प्रतीक्षेथास्तदा मुनिजनप्रिय ।
आगमिष्याम्यह शृङ्गी विज्ञेयस्तेन तापस ।।
एवमेतत्त्वया कार्यमापृष्टोऽसि व्रजाम्यहम् ।
नातिशङ्क्यमिद चापि वचन ते ममाभिभो ।।
एव करिष्य इति त स मत्स्य प्रत्यभाषत ।
जग्मतुश्च यथाकाममनुज्ञाप्य परस्परम् ।।
ततो मनुर्महाराज यथोक्त मत्स्यकेन ह ।
बीजान्यादाय सर्वाणि सागर पुप्लुवे तदा ।
नावा तु शुभया वीर महोर्मिणमरिंदम ।।
चिन्तयामास च मनुस्तं मत्स्य पृथिवीपते ।
स च तच्चिन्तित ज्ञात्वा मत्स्य परपुरजय ।
शृङ्गी तत्राजगामाशु तदा भरतसत्तम ।।
तं दृष्ट्वा मनुजेन्द्रेन्द्र मनुर्मत्स्य जलार्णवे ।
शृङ्गिण तं यथोक्तेन रूपेणाद्रिमिवोच्छ्रितम् ।।
वटाकरमय पाशमथ मत्स्यस्य मूर्धनि ।
मनुर्मनुजशार्दूल तस्मिञ्शृङ्गे न्यवेशयत् ।।
सयतस्तेन पाशेन मत्स्य परपुरजय ।
वेगेन महता नाव प्राकर्षल्लवणाम्भसि ।।
स ततार तया नावा समुद्र मनुजेश्वर ।
नृत्यमानमिवोर्मीभिर्गर्जमानमिवाम्भसा ।।
क्षोभ्यमाणा महावातै सा नौस्तस्मिन्महोदधौ ।
घूर्णते चपलेव स्त्री मत्ता परपुरंजय ।।
नैव भूमिर्न च दिश प्रदिशो वा चकाशिरे ।
सर्वमाम्भसमेवासीत्खं द्यौश्च नरपुगव ।।

एवंभूते तदा लोके सकुले भरतर्षभ ।
अदृश्यन्त सप्तर्षयो मनुर्मत्स्य सहैव ह ।।
एवं वहून्वर्षगणास्ता नाव सोऽथ मत्स्यक ।
चकर्षातन्द्रितो राजस्तस्मिन्सलिलसचये ।।
ततो हिमवतः शृङ्ग यत्पर पुरुषर्षभ ।
तत्राकर्षत्ततो नाव स मत्स्य कुरुनन्दन ।।
ततोऽब्रवीत्तदा मत्स्यस्तानृषीन्प्रहसञ्शनै ।
अस्मिन्हिमवत. शृङ्गे नाव वध्नीत माचिरम् ।।
सा वद्धा तत्र तैस्तूर्णमृपिभिर्भरतर्षभ ।
नौर्मत्स्यस्य वच श्रुत्वा शृङ्गे हिमवतस्तदा ।।
तच्च नौवन्धन नाम शृङ्ग हिमवत. परम् ।
ख्यातमद्यापि कौन्तेय तद्विद्धि भरतर्षभ ।।
अथाब्रवीदनिमिषस्तानृषीन्सहितास्तदा ।
अहं प्रजापतिर्ब्रह्मा मत्पर नाधिगम्यते ।
मत्स्यरूपेण यूयं च मयास्मान्मोक्षिता भयात् ।।
मनुना च प्रजाः सर्वा सदेवासुरमानवा ।
स्रष्टव्या सर्वलोकाश्च यच्चेङ्ग यच्च नेङ्गति ।।
तपसा चातितीव्रेण प्रतिभास्य भविष्यति ।
मत्प्रसादात्प्रजासर्गे न च मोह गमिष्यति ।।
इत्युक्त्वा वचन मत्स्य क्षणेनादर्शनं गत ।
स्रष्टुकाम. प्रजाश्चापि मनुर्वैवस्वत स्वयम् ।
प्रमूढोऽभूत्प्रजासर्गे तपस्तेपे महत्तत ।।
तपसा महता युक्त सोऽथ स्रष्टु प्रचक्रमे ।
सर्वाः प्रजा मनु साक्षाद्यथावद्भरतर्षभ ।।

# यमसावित्रीसंवादः

(म० ३।२८१)

मार्कण्डेय उवाच

अथ भार्यासहाय स फलान्यादाय वीर्यवान् ।
कठिन पूरयामास तत काष्ठान्यपाटयत् ।।
तस्य पाटयत. काष्ठ स्वेदो वै समजायत ।
व्यायामेन च तेनास्य जज्ञे शिरसि वेदना ।।
सोऽभिगम्य प्रिया भार्यामुवाच श्रमपीडितः ।
व्यायामेन ममानेन जाता शिरसि वेदना ।।
अङ्गानि चैव सावित्रि हृदय दूयतीव च ।
अस्वस्थमिव चात्मान लक्षये मितभाषिणि ।।
शूलैरिव शिरो विद्धमिद सलक्षयाम्यहम् ।
तत्स्वप्तुमिच्छे कल्याणि न स्थातु शक्तिरस्ति मे ।।
समासाद्याथ सावित्री भर्तारमुपगूह्य च ।
उत्सङ्गेऽस्य शिर कृत्वा निषसाद महीतले ।।
तत सा नारदवचो विमृशन्ती तपस्विनी ।
तं मुहूर्त क्षण वेलां दिवस च युयोज ह ।।
मुहूर्तादिव चापश्यत्पुरुष पीतवाससम् ।
बद्धमौलि वपुष्मन्तमादित्यसमतेजसम् ।।
श्यामावदात रक्ताक्ष पाशहस्त भयावहम् ।
स्थितं सत्यवत पार्श्वे निरीक्षन्त तमेव च ।।
त दृष्ट्वा सहसोत्थाय भर्तुर्न्यस्य शनै. शिरः ।
कृताञ्जलिरुवाचार्ता हृदयेन प्रवेपता ।।
दैवत त्वाभिजानामि वपुरेतद्धचमानुपम् ।
कामया ब्रूहि मे देव कस्त्व कि च चिकीर्षसि ।।

यम उवाच।

पतिव्रतासि सावित्रि तथैव च तपोन्विता।
अतस्त्वामभिभाषामि विद्धि मा त्व शुभे यमम्॥
अयं ते सत्यवान्भर्ता क्षीणायु. पार्थिवात्मज·।
नेष्याम्येनमह वद्ध्वा विद्धचेतन्मे चिकीर्षितम्॥

मार्कण्डेय उवाच।

इत्युक्त्वा पितृराजस्तां भगवान्स्व चिकीर्पितम्।
यथावत्सर्वमाख्यातु तत्प्रियार्थं प्रचक्रमे॥
अयं हि धर्मसयुक्तो रूपवान्गुणसागर.।
नार्हो मत्पुरुषैर्नेतुमतोऽस्मि स्वयमागत॥
तत सत्यवत. कायात्पाशवद्ध वश गतम्।
अङ्गुष्ठमात्र पुरुष निश्चकर्ष यमो वलात्॥
तत समुद्धृतप्राण गतश्वास हतप्रभम्।
निर्विचेष्ट शरीर तद्बभूवाप्रियदर्शनम्॥
यमस्तु त तथा वद्ध्वा प्रयातो दक्षिणामुख।
सावित्री चापि दु खार्ता यममेवान्वगच्छत।
नियमव्रतससिद्धा महाभागा पतिव्रता॥

यम उवाच।

निवर्त गच्छ सावित्रि कुरुष्वास्यौर्ध्वदेहिकम्।
कृतं भर्तुस्त्वयानृण्य यावद्गम्य गत त्वया॥

सावित्र्युवाच।

यत्र मे नीयते भर्ता स्वय वा यत्र गच्छति।
मयापि तत्र गन्तव्यमेष धर्म सनातन॥
तपसा गुरुवृत्त्या च भर्तु स्नेहाद्व्रतेन च।
तव चैव प्रसादेन न मे प्रतिहता गति॥
प्राहु सप्तपद मित्र बुधास्तत्त्वार्थदर्शिन।
मित्रता च पुरस्कृत्य किंचिद्वक्ष्यामि तच्छृणु॥

नानात्मवन्तस्तु वने चरन्ति
धर्मं च वास च परिश्रम च ।
विज्ञानतो धर्ममुदाहरन्ति
तस्मात्सन्तो धर्ममाहुः प्रधानम् ।।
एकस्य धर्मेण सता मतेन
सर्वे स्म त मार्गमनुप्रपन्नाः ।
मा वै द्वितीयं मा तृतीय च वाञ्छे
तस्मात्सन्तो धर्ममाहुः प्रधानम् ।।

यम उवाच ।

निवर्त तुष्टोऽस्मि तवानया गिरा
स्वराक्षरव्यञ्जनहेतुयुक्तया ।
वरं वृणीष्वेह विनास्य जीवित
ददानि ते सर्वमनिन्दिते वरम् ।।

सावित्र्युवाच ।

च्युतः स्वराज्याद्वनवासमाश्रितो
विनष्टचक्षु श्वशुरो ममाश्रमे ।
स लब्धचक्षुर्बलवान्भवेन्नृप-
स्तव प्रसादाज्ज्वलनार्कसंनिभः ।।

यम उवाच ।

ददानि ते सर्वमनिन्दिते वर
यथा त्वयोक्त भविता च तत्तथा ।
तवाध्वना ग्लानिमिवोपलक्षये
निवर्त गच्छस्व न ते श्रमो भवेत् ।।

सावित्र्युवाच ।

कुत. श्रमो भर्तृसमीपतो हि मे
यतो हि भर्ता मम सा गतिर्ध्रुवा ।

यत पति नेष्यसि तत्र मे गति·
सुरेश भूयश्च वचो निबोध मे ॥
सता सकृत्सगतमीप्सित पर
ततः परं मित्रमिति प्रचक्षते ।
न चाफलं सत्पुरुषेण सगत
तत सता सनिवसेत्समागमे ॥

यम उवाच ।

मनोनुकूल बुधबुद्धिवर्धन
त्वयाहमुक्तो वचन हिताश्रयम् ।
विना पुन· सत्यवतोऽस्य जीवित
वरं द्वितीय वरयस्व भामिनि ॥

सावित्र्युवाच ।

हृत पुरा मे श्वशुरस्य धीमत
स्वमेव राज्य स लभेत पार्थिव ।
जह्यात्स्वधर्मं न च मे गुरुर्यथा
द्वितीयमेत वरयामि ते वरम् ॥

यम उवाच ।

स्वमेव राज्य प्रतिपत्स्यतेऽचिरा-
न्न च स्वधर्मात्परिहास्यते नृपः ।
कृतेन कामेन मया नृपात्मजे
निवर्त गच्छस्व न ते श्रमो भवेत् ॥

सावित्र्युवाच ।

प्रजास्त्वयेमा नियमेन सयता
नियम्य चैता नयसे न कामया ।
अतो यमत्व तव देव विश्रुत
निबोध चेमा गिरमीरिता मया ॥

अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च सतां धर्मः सनातनः ॥
एवंप्रायश्च लोकोऽयं मनुष्याः शक्तिपेशलाः ।
सन्तस्त्वेवाप्यमित्रेषु दयां प्राप्तेषु कुर्वते ॥

यम उवाच ।

पिपासितस्येव यथा भवेत्पय-
स्तथा त्वया वाक्यमिदं समीरितम् ।
विना पुनः सत्यवतोऽस्य जीवितं
वरं वृणीष्वेह शुभे यदिच्छसि ॥

सावित्र्युवाच ।

ममानपत्यः पृथिवीपतिः पिता
भवेत्पितुः पुत्रशतं ममौरसम् ।
कुलस्य संतानकरं च यद्भवे-
त्तृतीयमेतं वरयामि ते वरम् ॥

यम उवाच ।

कुलस्य संतानकरं सुवर्चसं
शतं सुतानां पितुरस्तु ते शुभे ।
कृतेन कामेन नराधिपात्मजे
निवर्त दूरं हि पथस्त्वमागता ॥

सावित्र्युवाच ।

न दूरमेतन्मम भर्तृसंनिधौ
मनो हि मे दूरतरं प्रधावति ।
तथा व्रजन्नेव गिरं समुद्यतां
मयोच्यमानां शृणु भूय एव च ॥
विवस्वतस्त्वं तनयः प्रतापवां-
स्ततो हि वैवस्वत उच्यसे बुधैः ।

शमेन धर्मेण च रञ्जिताः प्रजा-
स्ततस्तवेहेश्वर धर्मराजता ।।
आत्मन्यपि न विश्वासस्तावान्भवति सत्सु य. ।
तस्मात्सत्सु विशेषेण सर्व प्रणयमिच्छति ।।
सौहृदात्सर्वभूताना विश्वासो नाम जायते ।
तस्मात्सत्सु विशेषेण विश्वास कुरुते जन ।।

यम उवाच ।

उदाहृत ते वचनं यदङ्गने
शुभे न तादृक्त्वदृते मया श्रुतम् ।
अनेन तुष्टोऽस्मि विनास्य जीवित
वर चतुर्थं वरयस्व गच्छ च ।।

सावित्र्युवाच ।

ममात्मज सत्यवतस्तथौरस
भवेदुभाभ्यामिह यत्कुलोद्वहम् ।
शत सुताना बलवीर्यशालिना-
मिद चतुर्थं वरयामि ते वरम् ।।

यम उवाच ।

शत सुताना बलवीर्यशालिना
भविष्यति प्रीतिकर तवाबले ।
परिश्रमस्ते न भवेन्नृपात्मजे
निवर्त दूर हि पथस्त्वमागता ।।

सावित्र्युवाच ।

सता सदा शाश्वती धर्मवृत्ति
सन्तो न सीदन्ति न च व्यथन्ति ।
सता सद्भिर्नाफल सगमोऽस्ति
सद्भ्यो भय नानुवर्तन्ति सन्त ।।

सन्तो हि सत्येन नयन्ति सूर्यं
सन्तो भूमि तपसा धारयन्ति ।
सन्तो गतिर्भूतभव्यस्य राज-
न्सता मध्ये नावसीदन्ति सन्त. ।।
आर्यजुष्टमिद वृत्तमिति विज्ञाय शाश्वतम् ।
सन्तः परार्थं कुर्वाणा नावेक्षन्ते प्रतिक्रियाम् ।।
न च प्रसाद. सत्पुरुषेषु मोघो
न चाप्यर्थो नश्यति नापि मानः ।
यस्मादेतन्नियत सत्सु नित्य
तस्मात्सन्तो रक्षितारो भवन्ति ।।

यम उवाच ।

यथा यथा भाषसि धर्मसहित
मनोनुकूल सुपद महार्थवत् ।
तथा तथा मे त्वयि भक्तिरुत्तमा
वर वृणीष्वाप्रतिम यतव्रते ।।

सावित्र्युवाच ।

न तेऽपवर्ग· सुकृताद्विनाकृत-
स्तथा यथान्येपु वरेपु मानद ।
वरं वृणे जीवतु सत्यवानय
यथा मृता ह्येवमह विना पतिम् ।।
न कामये भर्तृ विनाकृता सुख
न कामये भर्तृ विनाकृता दिवम् ।
न कामये भर्तृ विनाकृता श्रिय
न भर्तृहीना व्यवसामि जीवितुम् ।।
वरातिसर्ग शतपुत्रता मम
त्वयैव दत्तो ह्रियते च मे पतिः ।
वरं वृणे जीवतु सत्यवानय
तवैव सत्य वचन भविष्यति ।।

मार्कण्डेय उवाच ।

तथेत्युक्त्वा तु तान्पाशान्मुक्त्वा वैवस्वतो यमः ।
धर्मराज. प्रहृष्टात्मा सावित्रीमिदमब्रवीत् ।।
एष भद्रे मया मुक्तो भर्ता ते कुलनन्दिनि ।
अरोगस्तव नेयञ्च सिद्धार्थश्च भविष्यति ।।
एवं तस्यै वर दत्त्वा धर्मराज प्रतापवान् ।
निवर्तयित्वा सावित्री स्वमेव भवन ययौ ।।

# उत्तरगोग्रहे बृहन्नडासारथ्यम्

(म० ४।३४-३६)

उत्तर उवाच ।

अद्याहमनुगच्छेय दृढधन्वा गवा पदम् ।
यदि मे सारथि. कश्चिद्भवेदश्वेषु कोविद. ।।
तमेव नाधिगच्छामि यो मे यन्ता भवेन्नर· ।
पश्यध्व सारथि क्षिप्र मम युक्त प्रयास्यतः ।।
अष्टाविशतिरात्र वा मास वा नूनमन्तत ।
यत्तदासीन्महद्युद्ध तत्र मे सारथिर्हतः ।।
स लभेय यदि त्वन्य हययानविद नरम् ।
त्वरावानद्य यात्वाहं समुच्छ्रितमहाध्वजम् ।।
विगाह्य तत्परानीक गजवाजिरथाकुलम् ।
शस्त्रप्रतापनिर्वीर्यान्कुरूञ्जित्वानये पशून् ।।
दुर्योधनं शातनव कर्ण वैकर्तन कृपम् ।
द्रोण च सह पुत्रेण महेष्वासान्समागतान् ।।
वित्रासयित्वा सग्रामे दानवानिव वज्रभृत् ।
अनेनैव मुहूर्तेन पुन· प्रत्यानये पशून् ।।
शून्यमासाद्य कुरव· प्रयान्त्यादाय गोधनम् ।
कि नु शक्य मया कर्तु यदह तत्र नाभवम् ।।
पश्येयुरद्य मे वीर्य कुरवस्ते समागता ।
कि नु पार्थोऽर्जुन· साक्षादयमस्मान्प्रबाधते ।।

वैशपायन उवाच ।

तस्य तद्वचन स्त्रीषु भाषत. स्म पुनः पुन ।
नामर्षयत पाञ्चाली बीभत्सो. परिकीर्तनम् ।।
अथैनमुपसगम्य स्त्रीमध्यात्सा तपस्विनी ।
व्रीडमानेव शनकैरिदं वचनमब्रवीत् ।।

योऽसौ बृहद्वारणाभो युवा सुप्रियदर्शन ।
बृहन्नडेति विख्यात. पार्थस्यासीत्स सारथि: ।।
धनुष्यनवरश्चासीत्तस्य शिष्यो महात्मन ।
दृष्टपूर्वो मया वीर चरन्त्या पाण्डवान्प्रति ।।
यदा तत्पावको दावमदहत्खाण्डव महत् ।
अर्जुनस्य तदानेन सगृहीता हयोत्तमा ।।
तेन सारथिना पार्थं सर्वभूतानि सर्वश ।
अजयत्खाण्डवप्रस्थे न हि यन्तास्ति तादृश ।।
येयं कुमारी सुश्रोणी भगिनी ते यवीयसी ।
अस्या. स वचन वीर करिष्यति न सशय ।।
यदि वै सारथि. स स्यात्कुरुन्सर्वानसशयम् ।
जित्वा गाश्च समादाय ध्रुवमागमन भवेत् ।।
एवमुक्त: स सैरन्ध्र्या भगिनी प्रत्यभाषत ।
गच्छ त्वमनवद्याङ्गि तामानय बृहन्नडाम् ।।
सा भ्रात्रा प्रेषिता शीघ्रमगच्छन्नर्तनागृहम् ।
यत्रास्ते स महाबाहुश्छन्न· सत्रेण पाण्डव ।।
सा तां दृष्ट्वा विशालाक्षी राजपुत्री सखी सखा ।
प्रहसन्नब्रवीद्राजन्कुत्रागमनमित्युत ।।
तामब्रवीद्राजपुत्री समुपेत्य नरर्षभम् ।
प्रणय भावयन्ती स्म सखीमध्य इद वच· ।।
गावो राष्ट्रस्य कुरुभि काल्यन्ते नो बृहन्नडे ।
तान्विजेतु मम भ्राता प्रयास्यति धनुर्धर ।।
नचिर च हतस्तस्य सग्रामे रथसारथि ।
तेन नास्ति सम सूतो योऽस्य सारथ्यमाचरेत् ।।
तस्मै प्रयतमानाय सारथ्यर्थं बृहन्नडे ।
आचचक्षे हयज्ञाने सैरन्ध्री कौशल तव ।।
सा सारथ्य मम भ्रातु कुरु साधु बृहन्नडे ।
पुरा दूरतर गावो ह्रियन्ते कुरुभिर्हि न. ।।
एवमुक्तस्तु सुश्रोण्या तया सख्या परतप ।
जगाम राजपुत्रस्य सकाशममितौजस. ।।

दूरादेव तु त प्रेक्ष्य राजपुत्रोऽभ्यभाषत ।
त्वया सारथिना पार्थ. खाण्डवेऽग्निमतर्पयत् ।।
पृथिवीमजयत्कृत्स्ना कुन्तीपुत्रो धनंजयः ।
सैरन्ध्री त्वा समाचष्ट सा हि जानाति पाण्डवान् ।।
संयच्छ मामकानश्वास्तथैव त्व बृहन्नडे ।
कुरुभिर्योत्स्यमानस्य गोधनानि परीप्सत· ।।
एवमुक्ता प्रत्युवाच राजपुत्र बृहन्नडा ।
का शक्तिर्मम सारथ्य कर्तुं सग्रामसूर्धनि ।।
गीत वा यदि वा नृत्त वादित्र वा पृथग्विधम् ।
तत्करिष्यामि भद्र ते सारथ्य तु कुतो मयि ।।

उत्तर उवाच ।

बृहन्नडे गायनो वा नर्तनो वा पुनर्भव ।
क्षिप्र मे रथमास्थाय निगृह्णीष्व हयोत्तमान् ।।

वैशपायन उवाच ।

स तत्र नर्मसयुक्तमकरोत्पाण्डवो बहु ।
उत्तराया प्रमुखत· सर्व जानन्नरिदम ।।
ऊर्ध्वमुत्क्षिप्य कवच शरीरे प्रत्यमुञ्चत ।
कुमार्यस्तत्र तं दृष्ट्वा प्राहसन्पृथुलोचना. ।।
स तु दृष्ट्वा विमुह्यन्त स्वयमेवोत्तरस्तत. ।
कवचेन महार्हेण समनह्यद्बृहन्नडाम् ।।
स बिभ्रत्कवच चाग्र्य स्वयमप्यशुमत्प्रभम् ।
ध्वज च सिहमुच्छ्रित्य सारथ्ये समकल्पयत् ।।
धनूपि च महार्हाणि बाणाश्च रुचिरान्बहून् ।
आदाय प्रययौ वीर स बृहन्नडसारथि. ।।
स राजधान्या निर्याय वैराटिः पृथिवीजय ।
प्रयाहीत्यब्रवीत्सूत यत्र ते कुरवो गता· ।।
समवेतान्कुरून्यावज्जिगीषूनवजित्य वै ।
गाश्चैषा क्षिप्रमादाय पुनरायामि स्व पुरम् ।।

ततस्ताश्चोदयामास· सदश्वान्पाण्डुनन्दन. ।
ते हया नरसिंहेन चोदिता वातरंहस: ।
आलिखन्त इवाकाशमूहु' काञ्चनमालिन ।।
नातिदूरमथो यात्वा मत्स्यपुत्रधनजयौ ।
अवेक्षेतामभित्रघ्नौ कुरूणा वलिना वलम् ।
श्मशानमभितो गत्वा आससाद कुरूनथ ।।
तदनीक महत्तेषा विवभौ सागरस्वनम् ।
सर्पमाणमिवाकाशे वन वहुलपादपम् ।।
ददृशे पार्थिवो रेणुर्जनितस्तेन सर्पता ।
दृष्टिप्रणाशो भूताना दिवस्पृङनरसत्तम ।।
तदनीक महद्दृष्ट्वा गजाश्वरथसकुलम् ।
कर्णदुर्योधनकृपैर्गुप्त शातनवेन च ।।
द्रोणेन च सपुत्रेण महेष्वासेन धीमता ।
हृष्टरोमा भयोद्विग्न पार्थ वैराटिरब्रवीत् ।।
नोत्सहे कुरुभिर्योद्धु रोमहर्षं हि पश्य मे ।
वहुप्रवीरमत्युग्र देवैरपि दुरासदम् ।
प्रतियोद्धु न शक्ष्यामि कुरुसैन्यमनन्तकम् ।।
नाशसे भारती सेनां प्रवेष्टु भीमकार्मुकाम् ।
रथनागाश्वकलिला पत्तिध्वजसमाकुलाम् ।
दृष्ट्वैव हि परानाजावात्मा प्रव्यथतीव मे ।।
यत्र द्रोणश्च भीष्मश्च कृप कर्णो विविंशति ।
अश्वत्थामा विकर्णश्च सोमदत्तोऽथ वाह्लिक ।।
दुर्योधनस्तथा वीरो राजा च रथिना वर ।
द्युतिमन्तो महेष्वासा सर्वे युद्धविशारदा ।।
दृष्ट्वैव हि कुरूनेतान्व्यूढानीकान्प्रहारिण ।
हृषितानि च रोमाणि कश्मल चागत मम ।।

वैशपायन उवाच

अवियातो वियातस्य मौर्ख्याद्धूर्तस्य पश्यत· ।
परिदेवयते मन्द सकाशे सव्यसाचिन ।।

त्रिगर्तान्मे पिता यात. शून्ये संप्रणिधाय माम् ।
सर्वां सेनामुपादाय न मे सन्तीह सैनिका. ।।
सोऽहमेको वहून्बालः कृतास्त्रानकृतश्रम. ।
प्रतियोद्धु न शक्ष्यामि निवर्तस्व बृहन्नडे ।।

अर्जुन उवाच ।

भयेन दीनरूपोऽसि द्विषतां हर्षवर्धनः ।
न च तावत्कृतं किंचित्परैः कर्म रणाजिरे ।।
स्वयमेव च मामात्थ वह मां कौरवान्प्रति ।
सोऽह त्वा तत्र नेष्यामि यत्रैते बहुला ध्वजा. ।।
मध्यमामिषगृध्राणा कुरूणामाततायिनाम् ।
नेष्यामि त्वां महाबाहो पृथिव्यामपि युध्यताम् ।।
तथा स्त्रीषु प्रतिश्रुत्य पौरुष पुरुषेषु च ।
कत्थमानोऽभिनिर्याय किमर्थ न युयुत्ससे ।।
न चेद्विजित्य गास्तास्त्वं गृहान्वै प्रतियास्यसि ।
प्रहसिष्यन्ति वीर त्वा नरा नार्यश्च सगता. ।।
अहमप्यत्र सैरन्ध्र्या स्तुतः सारथ्यकर्मणि ।
न हि शक्ष्याम्यनिर्जित्य गा. प्रयातु पुरं प्रति ।।
स्तोत्रेण चैव सैरन्ध्र्यास्तव वाक्येन तेन च ।
कथ न युध्येयमह कुरून्सर्वान्स्थिरो भव ।।

उत्तर उवाच ।

काम हरन्तु मत्स्यानां भूयांसं कुरवो धनम् ।
प्रहसन्तु च मा नार्यो नरा वापि बृहन्नडे ।।

वैशपायन उवाच ।

इत्युक्त्वा प्राद्रवद्भीतो रथात्प्रस्कन्द्य कुण्डली ।
त्यक्त्वा मानं स मन्दात्मा विसृज्य सशर धनुः ।।

बृहन्नडोवाच ।

नैष पूर्वै. स्मृतो धर्म· क्षत्रियस्य पलायनम् ।
श्रेयस्ते मरण युद्धे न भीतस्य पलायनम् ।।

वैशपायन उवाच

एवमुक्त्वा तु कौन्तेय· सोऽवप्लुत्य रथोत्तमात् ।
तमन्वधावद्धावन्त राजपुत्र धनजय. ।
दीर्घां वेणी विधुन्वान साधु रक्ते च वाससी ।।
विधूय वेणी धावन्तमजानन्तोऽर्जुन तदा ।
सैनिकाः प्राहसन्केचित्तथारूपमवेक्ष्य तम् ।।
उत्तरं तु प्रधावन्तमनुद्रुत्य धनजय· ।
गत्वा पदशतं तूर्णं केशपक्षे परामृशत् ।।
सोऽर्जुनेन परामृष्ट. पर्यदेवयदार्तवत् ।
वहुल कृपण चैव विराटस्य सुतस्तदा ।
शातकुम्भस्य शुद्धस्य शत निष्कान्ददामि ते ।
मणीनष्टौ च वैडूर्यान्हेमवद्धान्महाप्रभान् ।।
हेमदण्डप्रतिच्छन्न रथ युक्त च सुव्रजै ।
मत्तांश्च दश मातङ्गान्मुञ्च मां त्व बृहन्नडे ।।
एवमादीनि वाक्यानि विलपन्तमचेतसम् ।
प्रहस्य पुरुषव्याघ्रो रथस्यान्तिकमानयत् ।।
अथैनमब्रवीत्पार्थो भयार्त नष्टचेतसम् ।
यदि नोत्सहसे योद्धु शत्रुभि शत्रुकर्शन ।
एहि मे त्वं हयान्यच्छ युध्यमानस्य शत्रुभि. ।।
प्रयाह्येतद्रथानीक मद्वाहुबलरक्षित ।
अप्रधृष्यतम घोर गुप्त वीरैर्महारथै. ।।
मा भैस्त्व राजपुत्राग्य क्षत्रियोऽसि परतप ।
अह वै कुरुभिर्योत्स्याम्यवजेष्यामि ते पशून् ।।
प्रविश्यैतद्रथानीकमप्रधृष्य दुरासदम् ।
यन्ता भूस्त्व नरश्रेष्ठ योत्स्येऽह कुरुभि. सह ।।

एव ब्रुवाणो बीभत्सुर्वैराटिमपराजित · ।
समाश्वास्य मुहूर्त तमुत्तर भरतर्षभ ।।
तत एन विचेष्टन्तमकाम भयपीडितम् ।
रथमारोपयामास पार्थ प्रहरता वर. ।।

# विदुरापुत्रानुशासनम्

(म० ५।१३१-१३४)

कुन्त्युवाच ।

अत्राप्युदाहरन्तीममितिहास पुरातनम् ।
विदुरायाश्च सवाद पुत्रस्य च परतप ।।
अत्र श्रेयश्च भूयश्च यथा सा वक्तुमर्हति ।
यशस्विनी मन्युमती कुले जाता विभावरी ।।
क्षत्रधर्मरता धन्या विदुरा दीर्घदर्शिनी ।
विश्रुता राजससत्सु श्रुतवाक्या वहुश्रुता ।।
विदुरा नाम वै सत्या जगर्हे पुत्रमौरसम् ।
निर्जित सिन्धुराजेन शयान दीनचेतसम् ।
अनन्दनमधर्मज्ञ द्विपता हर्षवर्धनम् ।।

मातोवाच ।

न मया त्व न पित्रासि जात क्वाभ्यागतो ह्यसि ।
निर्मन्युरुपशाखीय पुरुष क्लीबसाधन ।।
यावज्जीव निराशोऽसि कल्याणाय धुर वह ।
मात्मानमवमन्यस्व मैनमल्पेन बीभर ।
मन कृत्वा सुकल्याण मा भैस्त्व प्रतिसस्तभ ।।
उत्तिष्ठ हे कापुरुष मा शेष्वैव पराजित ।
अमित्रान्नन्दयन्सर्वान्निर्मानो बन्धुशोकद ।।
सुपूरा वै कुनदिका सुपूरो मूषिकाञ्जलि ।
सुसतोष कापुरुष स्वल्पकेनापि तुष्यति ।।
अप्यरेरारुजन्दष्ट्रामाश्वेव निधन व्रज ।
अपि वा सशय प्राप्य जीवितेऽपि पराक्रम ।।
अप्यरे श्येनवच्छिद्र पश्येस्त्व विपरिक्रमन् ।
विनदन्वाथ वा तूष्णी व्योम्नि वापरिशङ्कित ।।
त्वमेव प्रेतवच्छेषे कस्माद्वज्रहतो यथा ।

उत्तिष्ठ हे कापुरुष मा शेष्वैवं पराजित: ।।
मास्तं गमस्त्व कृपणो विश्रूयस्व स्वकर्मणा ।
मा मध्ये मा जघन्ये त्व माधो भूस्तिष्ठ चोर्जित: ।।
अलातं तिन्दुकस्येव मुहूर्तमपि विज्वल ।
मा तुषाग्निरिवानर्चि. काकरङ्ख्वा जिजीविषु: ।
मुहूर्तं ज्वलित श्रेयो न तु धूमायित चिरम् ।।
मा ह स्म कस्यचिद्गेहे जनी राज्ञः खरीमृदु. ।
कृत्वा मानुष्यक कर्म सृत्वाजि यावदुत्तमम् ।
धर्मस्यानृण्यमाप्नोति न चात्मान विगर्हते ।।
अलब्ध्वा यदि वा लब्ध्वा नानुशोचन्ति पण्डिता: ।
आनन्तर्य चारभते न प्राणाना धनायते ।।
उद्भावयस्व वीर्य वा ता वा गच्छ ध्रुवा गतिम् ।
धर्मं पुत्राग्रत: कृत्वा किनिमित्तं हि जीवसि ।।
इष्टापूर्तं हि ते क्लीब कीर्तिश्च सकला हता ।
विच्छिन्न भोगमूल ते किनिमित्त हि जीवसि ।।
शत्रुर्निमज्जता ग्राह्यो जङ्घाया प्रपतिष्यता ।
विपरिच्छिन्नमूलोऽपि न विपीदेत्कथचन ।
उद्यम्य धुरमुत्कर्षेदाजानेयकृत स्मरन् ।।
कुरु सत्त्व च मान च विद्धि पौरुषमात्मन ।
उद्भावय कुल मग्न त्वत्कृते स्वयमेव हि ।।
यस्य वृत्त न जल्पन्ति मानवा महदद्भुतम् ।
राशिवर्धनमात्र स नैव स्त्री न पुन पुमान् ।।
दाने तपसि शौर्ये च यस्य न प्रथित यश: ।
विद्यायामर्थलाभे वा मातुरुच्चार एव सः ।।
श्रुतेन तपसा वापि श्रिया वा विक्रमेण वा ।
जनान्योऽभिभवत्यन्यान्कर्मणा हि स वै पुमान् ।।
न त्वेव जाल्मी कापाली वृत्तिमेपितुमर्हसि ।
नृशस्यामयशस्या च दु खां कापुरुषोचिताम् ।।
यमेनमभिनन्देयुरमित्रा पुरुप कृशम् ।
लोकस्य समवज्ञात निहीनाशनवाससम् ।।

अहोलाभकर दीनमल्पजीवनमल्पकम् ।
नेदृश वन्धुमासाद्य बान्धव· सुखमेधते ।।
अवृत्त्यैव विपत्स्यामो वय राष्ट्रात्प्रवासिताः ।
सर्वकामरसैर्हीना स्थानभ्रष्टा अकिंचनाः ।।
अवर्णकारिण सत्सु कुलवशस्य नाशनम् ।
कलि पुत्रप्रवादेन सजय त्वामजीजनम् ।।
निरमर्ष निरुत्साह निर्वीर्यमरिनन्दनम् ।
मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् ।।
मा धूमाय ज्वलात्यन्तमाक्रम्य जहि शात्रवान् ।
ज्वल मूर्धन्यमित्राणां मुहूर्तमपि वा क्षणम् ।।
एतावानेव पुरुषो यदमर्षी यदक्षमी ।
क्षमावान्निरमर्षश्च नैव स्त्री न पुन. पुमान् ।।
सतोषो वै श्रिय हन्ति तथानुक्रोश एव च ।।
अनुत्थानभये चोभे निरीहो नाश्नुते महत् ।।
एभ्यो निकृतिपापेभ्य प्रमुञ्चात्मानमात्मना ।
आयस हृदय कृत्वा मृगयस्व पुन स्वकम् ।।
पुर विषहते यस्मात्तस्मात्पुरुष उच्यते ।
तमाहुर्व्यर्थनामान स्त्रीवद्य इह जीवति ।।
शूरस्योर्जितसत्त्वस्य सिंहविक्रान्तगामिन ।
दिष्टभाव गतस्यापि विघसे मोदते प्रजा ।।
य आत्मन. प्रियसुखे हित्वा मृगयते श्रियम् ।
अमात्यानामथो हर्षमादधात्यचिरेण सः ।।

पुत्र उवाच ।

किं नु ते मामपश्यन्त्या पृथिव्या अपि सर्वया ।
किमाभरणकृत्य ते कि भोगैर्जीवितेन वा ।।

मातोवाच ।

किमद्यकाना ये लोका द्विषन्तस्तानवाप्नुयु ।
ये त्वादृतात्मना लोका सुहृदस्तान्व्रजन्तु न ।।
भृत्यैर्विहीयमानाना परपिण्डोपजीविनाम् ।

कृपणानामसत्त्वानां मा वृत्तिमनुवर्तिथा ॥
अनु त्वां तात जीवन्तु ब्राह्मणाः सुहृदस्तथा ।
पर्जन्यमिव भूतानि देवा इव शतक्रतुम् ॥
यमाजीवन्ति पुरुष सर्वभूतानि सजय ।
पक्व द्रुममिवासाद्य तस्य जीवितमर्थवत् ॥
यस्य शूरस्य विक्रान्तैरेधन्ते बान्धवा. सुखम् ।
त्रिदशा इव शक्रस्य साधु तस्येह जीवितम् ॥
स्वबाहुबलमाश्रित्य योऽभ्युज्जीवति मानव ।
स लोके लभते कीर्ति परत्र च शुभां गतिम् ॥
अथैतस्यामवस्थाया पौरुष हातुमिच्छसि ।
निहीनसेवित मार्ग गमिष्यस्यचिरादिव ॥
यो हि तेजो यथाशक्ति न दर्शयति विक्रमात् ।
क्षत्रियो जीविताकाङ्क्षी स्तेन इत्येव त विदु ॥
अर्थवन्त्युपपन्नानि वाक्यानि गुणवन्ति च ।
नैव सप्राप्नुवन्ति त्वा मुमूर्षुमिव भेषजम् ॥
सन्ति वै सिन्धुराजस्य सतुष्टा बहवो जनाः ।
दौर्बल्यादासते मूढा व्यसनौघप्रतीक्षिण. ॥
सहायोपचय कृत्वा व्यवसाय्य ततस्ततः ।
अनुदुष्येयुरपरे पश्यन्तस्तव पौरुषम् ॥
तै. कृत्वा सह सघात गिरिदुर्गालयाश्चर ।
काले व्यसनमाकाङ्क्षन्नैवायमजरामरः ॥
सजयो नामतश्च त्व न च पश्यामि तत्त्वयि ।
अन्वर्थनामा भव मे पुत्र मा व्यर्थनामक ॥
सम्यग्दृष्टिर्महाप्राज्ञो बाल त्वा ब्राह्मणोऽब्रवीत् ।
अय प्राप्य महत्कृच्छ्र पुनर्वृद्धि गमिष्यति ॥
तस्य स्मरन्ती वचनमाशसे विजय तव ।
तस्मात्तात ब्रवीमि त्वा वक्ष्यामि च पुन. पुन ॥
यस्य ह्यर्थाभिनिर्वृत्तौ भवन्त्याप्यायिता. परे ।
तस्यार्थसिद्धिर्नियता नयेष्वर्थानुसारिणः ॥
समृद्धिरसमृद्धिर्वा पूर्वेषा मम संजय ।

एव विद्वान्युद्धमना भव मा प्रत्युपाहर ॥
नात पापीयसी काचिदवस्थां शम्वरोऽब्रवीत् ।
यत्र नैवाद्य न प्रातर्भोजन प्रतिदृश्यते ॥
पतिपुत्रवधादेतत्परम दु खमब्रवीत् ।
दारिद्र्यमिति यत्प्रोक्त पर्यायमरण हि तत् ॥
अह महाकुले जाता ह्रदाद्ध्रदमिवागता ।
ईश्वरी सर्वकल्याणैर्भर्त्रा परमपूजिता ॥
महार्हमाल्याभरणा सुमृष्टाम्वरवाससम् ।
पुरा दृष्ट्वा सुहृद्वर्गो मामपश्यत्सुदुर्गताम् ॥
यदा मां चैव भार्या च द्रष्टासि भृशदुर्बले ।
न तदा जीवितेनार्थो भविता तव सजय ।
दासकर्मकरान्भृत्यानाचार्यर्त्विक्पुरोहितान् ॥
अवृत्त्यास्मान्प्रजहतो दृष्ट्वा कि जीवितेन ते ॥
यदि कृत्य न पश्यामि तवाद्येह यथा पुरा ।
श्लाघनीय यशस्य च का शान्तिर्हृदयस्य मे ॥
नेति चेद्ब्राह्मणान्ब्रूया दीर्यते हृदय मम ।
न ह्यह न च मे भर्ता नेति ब्राह्मणमुक्तवान् ॥
वयमाश्रयणीया स्म नाश्रितार परस्य च ।
सान्यानाश्रित्य जीवन्ती परित्यक्ष्यामि जीवितम् ॥
अपारे भव न· पारमप्लवे भव न प्लव ।
कुरुष्व स्थानमस्थाने मृतान्संजीवयस्व न. ॥
सर्वे ते शत्रव. सह्या न चेज्जीवितुमिच्छसि ।
अथ चेदीदृशी वृत्ति क्लीबामभ्युपपद्यसे ॥
निर्विण्णात्मा हतमना मुञ्चैता पापजीविकाम् ।
एकशत्रुवधेनैव शूरो गच्छति विश्रुतिम् ॥
इन्द्रो वृत्रवधेनैव महेन्द्र. समपद्यत ।
माहेन्द्र च ग्रह लेभे लोकाना चेश्वरोऽभवत् ॥
नाम विश्राव्य वा सख्ये शत्रूनाहूय दशितान् ।
सेनाग्र वापि विद्राव्य हत्वा वा पुरुष वरम् ॥
यदैव लभते वीर. सुयुद्धेन महद्यश· ।

तदैव प्रव्यथन्तेऽस्य शत्रवो विनमन्ति च ।।
त्यक्त्वात्मानं रणे दक्षं शूरं कापुरुषा जना. ।
अवशा. पूरयन्ति स्म सर्वकामसमृद्धिभिः ।।
राज्यं वाप्युग्रविभ्रंश सशयो जीवितस्य वा ।
प्रलब्धस्य हि शत्रोर्वै शेष कुर्वन्ति साधवः ।।
स्वर्गद्वारोपम राज्यमथ वाप्यमृतोपमम् ।
रुद्धमेकायने मत्वा पतोल्मुक इवारिषु ।।
जहि शत्रून्रणे राजन्स्वधर्ममनुपालय ।
मा त्वा पश्येत्सुकृपण शत्रु. श्रीमान्कदाचन ।।
अस्मदीयैश्च शोचद्भिर्नदद्भिश्च परैर्वृतम् ।
अपि त्वा नानुपश्येय दीना दीनमवस्थितम् ।।
उष्य सौवीरकन्याभि. श्लाघस्वार्थैर्यथा पुरा ।
मा च सैन्धवकन्यानामवसन्नो वशं गम ।।
युवा रूपेण सपन्नो विद्ययाभिजनेन च ।
यस्त्वादृशो विकुर्वीत यशस्वी लोकविश्रुतः ।
वोढव्ये धुर्यनडुवन्मन्ये मरणमेव तत् ।।
यदि त्वामनुपश्यामि परस्य प्रियवादिनम् ।
पृष्ठतोऽनुव्रजन्त वा का शान्तिर्हृदयस्य मे ।
नास्मिञ्जातु कुले जातो गच्छेद्योऽन्यस्य पृष्ठतः ।
न त्व परस्यानुधुर तात जीवितुमर्हसि ।।
अह हि क्षत्रहृदय वेद यत्परिशाश्वतम् ।
पूर्वैः पूर्वतरैः प्रोक्त परैः परतरैरपि ।।
यो वै कश्चिदिहाजात क्षत्रिय. क्षत्रधर्मवित् ।
भयाद्वृत्तिसमीक्षो वा न नमेदिह कस्यचित् ।।
उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेदिह कस्यचित् ।।
मातङ्गो मत्त इव च परीयात्सुमहामना ।
ब्राह्मणेभ्यो नमेन्नित्यं धर्मायैव च सजय ।।
नियच्छन्नितरान्वर्णान्विनिघ्नन्सर्वदुष्कृतः ।
ससहायोऽसहायो वा यावज्जीवं तथा भवेत् ।।

पुत्र उवाच ।

कृष्णायसस्येव च ते संहत्य हृदयं कृतम् ।
मम मातस्त्वकरुणे वैरप्रज्ञे ह्यमर्षणे ।।
अहो क्षत्रसमाचारो यत्र मामपरं यथा ।
ईदृशं वचनं ब्रूयाद्भवती पुत्रमेकजम् ।।
किं नु ते मामपश्यन्त्याः पृथिव्या अपि सर्वया ।
किमाभरणकृत्यं ते किं भोगैर्जीवितेन वा ।।

मातोवाच ।

सर्वारम्भा हि विदुषां तात धर्मार्थकारणात् ।
तानेवाभिसमीक्ष्याहं संजय त्वामचूचुदम् ।।
स समीक्ष्यक्रमोपेतो मुख्यः कालोऽयमागतः ।
अस्मिंश्चेदागते काले कार्यं न प्रतिपद्यसे ।
असंभावितरूपस्त्वं सुनृशंसं करिष्यसि ।।
तं त्वामयशसा स्पृष्टं न ब्रूयां यदि संजय ।
खरीवात्सल्यमाहुस्तन्निःसामर्थ्यमहेतुकम् ।।
सद्भिर्विगर्हितं मार्गं त्यज मूर्खनिषेवितम् ।
अविद्या वै महत्यस्ति यामिमाः संश्रिताः प्रजाः ।।
तव स्याद्यदि सद्वृत्तं तेन मे त्वं प्रियो भवेः ।
धर्मार्थगुणयुक्तेन नेतरेण कथंचन ।
दैवमानुषयुक्तेन सद्भिराचरितेन च ।।
यो ह्येवमविनीतेन रमते पुत्रनप्तृणा ।
अनुत्थानवता चापि मोघं तस्य प्रजाफलम् ।।
अकुर्वन्तो हि कर्माणि कुर्वन्तो निन्दितानि च ।
सुखं नैवेह नामुत्र लभन्ते पुरुषाधमाः ।।
युद्धाय क्षत्रियः सृष्टः संजयेह जयाय च ।
क्रूराय कर्मणे नित्यं प्रजानां परिपालने ।
जयन्वा वध्यमानो वा प्राप्नोतीन्द्रसलोकताम् ।।
न शक्रभवने पुण्ये दिवि तद्विद्यते सुखम् ।
यदमित्रान्वशे कृत्वा क्षत्रियः सुखमश्नुते ।।

मन्युना दह्यमानेन पुरुषेण मनस्विना ।
निकृतेनेह बहुशः शत्रून्प्रतिजिगीषया ।।
आत्मानं वा परित्यज्य शत्रून्वा विनिपात्य वै ।
अतोऽन्येन प्रकारेण शान्तिरस्य कुतो भवेत् ।।
इह प्राज्ञो हि पुरुषः स्वल्पमप्रियमिच्छति ।
यस्य स्वल्पं प्रिय लोके ध्रुव तस्याल्पमप्रियम् ।
प्रियाभावाच्च पुरुषो नैव प्राप्नोति शोभनम् ।
ध्रुवं चाभावमभ्येति गत्वा गङ्गेव सागरम् ।।

पुत्र उवाच ।

नेय मतिस्त्वया वाच्या मातः पुत्रे विशेषत. ।
कारुण्यमेवात्र पश्य भूत्वेह जडमूकवत् ।।

मातोवाच ।

अतो मे भूयसी नन्दिर्यदेवमनुपश्यसि ।
चोद्य मा चोदयस्येतद्भृश वै चोदयामि ते ।।
अथ त्वां पूजयिष्यामि हत्वा वै सर्वसैन्धवान् ।
अहं पश्यामि विजयं कृत्स्नं भाविनमेव ते ।।

पुत्र उवाच ।

अकोशस्यासहायस्य कुतः स्विद्विजयो मम ।
इत्यवस्था विदित्वेमामात्मनात्मनि दारुणाम् ।
राज्याद्भावो निवृत्तो मे त्रिदिवादिव दुष्कृतेः ।।
ईदृश भवती कंचिदुपायमनुपश्यति ।
तन्मे परिणतप्रज्ञे सम्यक्प्रब्रूहि पृच्छते ।
करिष्यामि हि तत्सर्वं यथावदनुशासनम् ।।

मातोवाच ।

पुत्रात्मा नावमन्तव्यः पूर्वाभिरसमृद्धिभिः ।
अभूत्वा हि भवन्त्यर्था भूत्वा नश्यन्ति चापरे ।।

अमर्षेणैव चाप्यर्था नारब्धव्याः सुबालिशैः ।
सर्वेषां कर्मणा तात फले नित्यमनित्यता ।।
अनित्यमिति जानन्तो न भवन्ति भवन्ति च ।
अथ ये नैव कुर्वन्ति नैव जातु भवन्ति ते ।।
ऐकगुण्यमनीहायामभावः कर्मणा फलम् ।
अथ द्वैगुण्यमीहाया फल भवति वा न वा ।
यस्य प्रागेव विदिता सर्वार्थानामनित्यता ।
नुदेद्वृद्धिसमृद्धी स प्रतिकूले नृपात्मज ।।
उत्थातव्य जागृतव्य योक्तव्य भूतिकर्मसु ।
भविष्यतीत्येव मनः कृत्वा सततमव्यथैः ।
मङ्गलानि पुरस्कृत्य ब्राह्मणैश्चेश्वरैः सह ।।
प्राज्ञस्य नृपतेराशु वृद्धिर्भवति पुत्रक ।
अभिवर्तति लक्ष्मीस्त प्राचीमिव दिवाकरः ।।
निदर्शनान्युपायांश्च वहून्युद्धर्षणानि च ।
अनुदर्शितरूपोऽसि पश्यामि कुरु पौरुषम् ।
पुरुषार्थमभिप्रेतं समाहर्तुमिहार्हसि ।।
क्रुद्धाँल्लुब्धान्परिक्षीणानवक्षिप्तान्विमानितान् ।
स्पर्धिनश्चैव ये केचित्तान्युक्त उपधारय ।।
एतेन त्व प्रकारेण महतो भेत्स्यसे गणान् ।।
महावेग इवोद्धूतो मातरिश्वा बलाहकान् ।।
तेषामग्रप्रदायी स्याः कल्योत्थायी प्रियवद ।
ते त्वा प्रियं करिष्यन्ति पुरो धास्यन्ति च ध्रुवम् ।।
यदैव शत्रुर्जानीयात्सपत्न त्यक्तजीवितम् ।
तदैवास्मादुद्विजते सर्पाद्वेश्मगतादिव ।।
त विदित्वा पराक्रान्त वशे न कुरुते यदि ।
निर्वादैर्निर्वदेदेनमन्ततस्तद्भविष्यति ।।
निर्वादादास्पद लब्ध्वा धनवृद्धिर्भविष्यति ।
धनवन्त हि मित्राणि भजन्ते चाश्रयन्ति च ।।
स्खलितार्थं पुनस्तात सत्यजन्त्यपि बान्धवा ।
अप्यस्मिन्नाश्रयन्ते च जुगुप्सन्ति च तादृशम् ।।

शत्रुं कृत्वा य. सहाय विश्वासमुपगच्छति ।
अत: सभाव्यमेवैतद्यद्राज्य प्राप्नुयादिति ।।
नैव राज्ञा दर: कार्यो जातु कस्याचिदापदि ।
अथ चेदपि दीर्ण. स्यान्नैव वर्तेत दीर्णवत् ।।
दीर्णं हि दृष्ट्वा राजान सर्वमेवानुदीर्यते ।
राष्ट्रं वलममात्याश्च पृथक्कुर्वन्ति ते मतिम् ।
शत्रूनेके प्रपद्यन्ते प्रजहत्यपरे पुन॰ ।
अन्वेके प्रजिहीर्षन्ति ये पुरस्ताद्विमानिता. ।।
य एवात्यन्तसुहृदस्त एनं पर्युपासते ।
अशक्तय. स्वस्तिकामा बद्धवत्सा इडा इव ।
शोचन्तमनुशोचन्ति प्रतीतानिव बान्धवान् ।।
अपि ते पूजिता: पूर्वमपि ते सुहृदो मता. ।
ये राष्ट्रमभिमन्यन्ते राज्ञो व्यसनमीयुष: ।
मा दीदरस्त्व सुहृदो मा त्वा दीर्णं प्रहासिषु: ।।
प्रभाव पौरुप बुद्धि जिज्ञासन्त्या मया तव ।
उल्लपन्त्या समाश्वास वलवानिव दुर्बलम् ।।
यद्येतत्संविजानासि यदि सम्यग्ब्रवीम्यहम् ।
कृत्वासौम्यमिवात्मान जयायोत्तिष्ठ सजय ।।
अस्ति न. कोशनिचयो महानविदितस्तव ।
तमहं वेद नान्यस्तमुपसंपादयामि ते ।।
सन्ति नैकशता भूय: सुहृदस्तव संजय ।
सुखदु खसहा वीर शतार्हा अनिवर्तिन: ।
तादृशा हि सहाया वै पुरुषस्य बुभूषत: ।
ईपदुज्जिहत: किंचित्सचिवा: शत्रुकर्शना: ।।

पुत्र उवाच ।

कस्य त्वीदृशक वाक्यं श्रुत्वापि स्वल्पचेतस: ।
तमो न व्यपहन्येत सुचित्रार्थपदाक्षरम् ।।
उदके धूरिय धार्या सर्तव्य प्रवणे मया ।
यस्य मे भवती नेत्री भविष्यद्भूतदर्शिनी ।।

अहं हि वचनं त्वत्तः शुश्रूषुरपरापरम् ।।
किंचित्किंचित्प्रतिवदंस्तूष्णीमास मुहुर्मुहुः ।।
अतृप्यन्नमृतस्येव कृच्छ्राल्लब्धस्य बान्धवात् ।
उद्यच्छाम्येष शत्रूणां नियमाय जयाय च ।।

कुन्त्युवाच ।

सदश्व इव स क्षिप्तः प्रणुन्नो वाक्यसायकैः ।
तच्चकार तथा सर्वं यथावदनुशासनम् ।।

# कर्णोपनिवादः

(म० ५।१३८-१४१)

वासुदेव उवाच ।

उपासितास्ते राधेय ब्राह्मणा वेदपारगा. ।
तत्त्वार्थं परिपृष्टाश्च नियतेनानसूयया ।।
त्वमेव कर्ण जानासि वेदवादान्सनातनान् ।।
त्व ह्येव धर्मशास्त्रेषु सूक्ष्मेषु परिनिष्ठित. ।।
कानीनश्च सहोढश्च कन्याया यश्च जायते ।
वोढार पितर तस्य प्राहु. शास्त्रविदो जनाः ।।
सोऽसि कर्ण तथा जातः पाण्डो पुत्रोऽसि धर्मतः ।
निग्रहाद्धर्मशास्त्राणामेहि राजा भविष्यसि ।।
पितृपक्षे हि ते पार्था मातृपक्षे च वृष्णय. ।
द्वौ पक्षावभिजानीहि त्वमेतौ पुरुषर्षभ ।।
मया सार्धमितो यातमद्य त्वा तात पाण्डवाः ।
अभिजानन्तु कौन्तेय पूर्वजात युधिष्ठिरात् ।।
पादौ तव ग्रहीष्यन्ति भ्रातर पञ्च पाण्डवा ।
द्रौपदेयास्तथा पञ्च सौभद्रश्चापराजितः ।।
राजानो राजपुत्राश्च पाण्डवार्थे समागता. ।
पादौ तव ग्रहीष्यन्ति सर्वे चान्धकवृष्णयः ।।
हिरण्मयांश्च ते कुम्भान्राजतान्पार्थिवास्तथा ।
ओषध्य सर्वबीजानि सर्वरत्नानि वीरुधः ।।
राजन्या राजकन्याश्चाप्यानयन्त्वभिषेचनम् ।
षष्ठे च त्वा तथा काले द्रौपद्युपगमिष्यति ।।
अद्य त्वामभिषिञ्चन्तु चातुर्वेद्या द्विजातयः ।
पुरोहित. पाण्डवाना व्याघ्रचर्मण्यवस्थितम् ।।
तथैव भ्रातरः पञ्च पाण्डवाः पुरुषर्षभाः ।
द्रौपदेयास्तथा पञ्च पाञ्चालाश्चेदयस्तथा ।।

अह् च त्वाभिषेक्ष्यामि राजान पृथिवीपतिम् ।
युवराजोऽस्तु ते राजा कुन्तीपुत्रो युधिष्ठिर. ।।
गृहीत्वा व्यजनं श्वेतं धर्मात्मा सशितव्रत. ।
उपान्वारोहतु रथ कुन्तीपुत्रो युधिष्ठिर. ।।
छत्रं च ते महच्छ्वेत भीमसेनो महावल. ।
अभिषिक्तस्य कौन्तेय कौन्तेयो धारयिष्यति ।।
किङ्किणीशतनिर्घोष वैयाघ्रपरिवारणम् ।
रथ श्वेतहयैर्युक्तमर्जुनो वाहयिष्यति ।।
अभिमन्युश्च ते नित्य प्रत्यासन्नो भविष्यति ।
नकुल: सहदेवश्च द्रौपदेयाश्च पञ्च ये ।।
पाञ्चालास्त्वानुयास्यन्ति शिखण्डी च महारथ. ।
अहं च त्वानुयास्यामि सर्वे चान्धकवृष्णय ।
दाशार्हा· परिवारास्ते दाशार्णाश्च विशा पते ।।
भुङ्क्ष्व राज्य महाबाहो भ्रातृभि सह पाण्डवै ।
जपैर्होमैश्च सयुक्तो मङ्गलैश्च पृथग्विधै ।।
पुरोगमाश्च ते सन्तु द्रविडा· सह कुन्तलै ।
आन्ध्रास्तालचराश्चैव चूचुपा वेणुपास्तथा ।।
स्तुवन्तु त्वाद्य वहुश स्तुतिभि: सूतमागधा. ।
विजय वसुषेणस्य घोषयन्तु च पाण्डवा ।।
स त्व परिवृत पार्थैर्नक्षत्रैरिव चन्द्रमा. ।
प्रशाधि राज्य कौन्तेय कुन्ती च प्रतिनन्दय ।।
मित्राणि ते प्रहृष्यन्तु व्यथन्तु रिपवस्तथा ।
सौभ्रात्र चैव तेऽद्यास्तु भ्रातृभि· सह पाण्डवै ।।

कर्ण उवाच ।

असशय सौहृदान्मे प्रणयाच्चात्थ केशव ।
सख्येन चैव वार्ष्णेय श्रेयस्कामतयैव च ।।
सर्वं चैवाभिजानामि पाण्डो पुत्रोऽस्मि धर्मत. ।
निग्रहाद्धर्मशास्त्राणा यथा त्व कृष्ण मन्यसे ।।
कन्या गर्भं समाधत्त भास्करान्मा जनार्दन ।

आदित्यवचनाच्चैव जातं मां सा व्यसर्जयत् ।।
सोऽस्मि कृष्ण तथा जात पाण्डोः पुत्रोऽस्मि धर्मतः ।
कुन्त्या त्वहमपाकीर्णो यथा न कुशलं तथा ।।
सूतो हि मामधिरथो दृष्ट्वैव अनयद्गृहान् ।
राधायाश्चैव मां प्रादात्सौहार्दान्मधुसूदन ।।
मत्स्नेहाच्चैव राधाया सद्यः क्षीरमवातरत् ।।
सा मे मूत्र पुरीष च प्रतिजग्राह माधव ।।
तस्याः पिण्डव्यपनयं कुर्यादस्मद्विध कथम् ।
धर्मविद्धर्मशास्त्राणा श्रवणे सतत रतः ।।
तथा मामभिजानाति सूतश्चाधिरथ. सुतम् ।
पितर चाभिजानामि तमह सौहृदात्सदा ।।
स हि मे जातकर्मादि कारयामास माधव ।
शास्त्रदृष्टेन विधिना पुत्रप्रीत्या जनार्दन ।।
नाम मे वसुषेणेति कारयामास वै द्विजै ।
भार्याश्चोढा मम प्राप्ते यौवने तेन केशव ।।
तासु पुत्राश्च पौत्राश्च मम जाता जनार्दन ।
तासु मे हृदय कृष्ण सजात कामबन्धनम् ।।
न पृथिव्या सकलया न सुवर्णस्य राशिभि. ।
हर्षाद्भयाद्वा गोविन्द अनृतं वक्तुमुत्सहे ।।
धृतराष्ट्रकुले कृष्ण दुर्योधनसमाश्रयात् ।
मया त्रयोदश समा भुक्तं राज्यमकण्टकम् ।।
इष्ट च वहुभिर्यज्ञै. सह सूतैर्मयासकृत् ।
आवाहाश्च विवाहाश्च सह सूतै कृता मया ।।
मां च कृष्ण समाश्रित्य कृत. शस्त्रसमुद्यम ।
दुर्योधनेन वार्ष्णेय विग्रहश्चापि पाण्डवैः ।।
तस्माद्रणे द्वैरथे मा प्रत्युद्यातारमच्युत ।
वृतवान्परमं हृष्टः प्रतीप सव्यसाचिन. ।।
वधाद्बन्धाद्भयाद्वापि लोभाद्वापि जनार्दन ।
अनृतं नोत्सहे कर्तु धार्तराष्ट्रस्य धीमत. ।।
यदि ह्यद्य न गच्छेय द्वैरथं सव्यसाचिना ।

अकीर्तिः स्याद्धृषीकेश मम पार्थस्य चोभयो ॥
असंशय हितार्थाय ब्रूयास्त्व मधुसूदन ।
सर्वं च पाण्डवा. कुर्युस्त्वद्वशित्वान्न सशय: ॥
मन्त्रस्य नियम कुर्यास्त्वमत्र पुरुषोत्तम ।
एतदत्र हित मन्ये सर्वयादवनन्दन ॥
यदि जानाति मा राजा धर्मात्मा संशितव्रत. ।
कुन्त्याः प्रथमज पुत्र न स राज्य ग्रहीष्यति ॥
प्राप्य चापि महद्राज्य तदह मधुसूदन ।
स्फीतं दुर्योधनायैव सप्रदद्यामरिंदम ॥
स एव राजा धर्मात्मा शाश्वतोऽस्तु युधिष्ठिरः ।
नेता यस्य हृषीकेशो योद्धा यस्य धनजय ॥
पृथिवी तस्य राष्ट्रं च यस्य भीमो महारथ ।
नकुल सहदेवश्च द्रौपदेयाश्च माधव ॥
महानय कृष्ण कृतः क्षत्रस्य समुदानय ।
राज्य प्राप्तमिद दीप्त प्रथित सर्वराजसु ॥
धार्तराष्ट्रस्य वार्ष्णेय शस्त्रयज्ञो भविष्यति ।
अस्य यज्ञस्य वेत्ता त्व भविष्यसि जनार्दन ।
आध्वर्यवं च ते कृष्ण क्रतावस्मिन्भविष्यति ॥
होता चैवात्र बीभत्सु· सनद्ध· स कपिध्वज ।
गाण्डीव स्रुक्तथाज्य च वीर्यं पुसा भविष्यति ॥
ऐन्द्र पाशुपतं ब्राह्मं स्थूणाकर्णं च माधव ।
मन्त्रास्तत्र भविष्यन्ति प्रयुक्ता सव्यसाचिना ॥
अनुयातश्च पितरमधिको वा पराक्रमे ।
ग्रावस्तोत्र स सौभद्र सम्यक्तत्र करिष्यति ॥
उद्गातात्र पुनर्भीम· प्रस्तोता सुमहाबल· ।
विनदन्स नरव्याघ्रो नागानीकान्तकृद्रणे ॥
स चैव तत्र धर्मात्मा शश्वद्राजा युधिष्ठिर ।
जपैर्होमैश्च सयुक्तो ब्रह्मत्व कारयिष्यति ॥
शङ्खशब्दा. समुरजा भेर्यश्च मधुसूदन ।
उत्कृष्टसिहनादाश्च सुब्रह्मण्यो भविष्यति ॥

नकुलः सहदेवश्च माद्रीपुत्रौ यशस्विनौ ।
शामित्रं तौ महावीर्यौ सम्यक्तत्र करिष्यतः ॥
कल्माषदण्डा गोविन्द विमला रथशक्तयः ।
यूपाः समुपकल्पन्तामस्मिन्यज्ञे जनार्दन ॥
कर्णिनालीकनाराचा वत्सदन्तोपबृंहणाः ।
तोमराः सोमकलशाः पवित्राणि धनूंषि च ॥
असयोऽत्र कपालानि पुरोडाशाः शिरांसि च ।
हविस्तु रुधिरं कृष्ण अस्मिन्यज्ञे भविष्यति ॥
इध्माः परिधयश्चैव शक्त्योऽथ विमला गदाः ।
सदस्या द्रोणशिष्याश्च कृपस्य च शरद्वतः ॥
इषवोऽत्र परिस्तोमा मुक्ता गाण्डीवधन्वना ।
महारथप्रयुक्ताश्च द्रोणद्रौणिप्रचोदिताः ।
प्रातिप्रस्थानिकं कर्म सात्यकिः स करिष्यति ॥
दीक्षितो धार्तराष्ट्रोऽत्र पत्नी चास्य महाचमूः ।
घटोत्कचोऽत्र शामित्रं करिष्यति महाबलः ।
अतिरात्रे महाबाहो वितते यज्ञकर्मणि ॥
दक्षिणा त्वस्य यज्ञस्य धृष्टद्युम्नः प्रतापवान् ।
वैताने कर्मणि तते जातो यः कृष्ण पावकात् ॥
यदब्रुवमहं कृष्ण कटुकानि स्म पाण्डवान् ।
प्रियार्थं धार्तराष्ट्रस्य तेन तप्येऽद्य कर्मणा ॥
यदा द्रक्ष्यसि मां कृष्ण निहतं सव्यसाचिना ।
पुनश्चितिस्तदा चास्य यज्ञस्याथ भविष्यति ॥
दुःशासनस्य रुधिरं यदा पास्यति पाण्डवः ।
आनर्दं नर्दतः सम्यक्तदा सुत्यं भविष्यति ॥
यदा द्रोणं च भीष्मं च पाञ्चाल्यौ पातयिष्यतः ।
तदा यज्ञावसानं तद्भविष्यति जनार्दन ॥
दुर्योधनं यदा हन्ता भीमसेनो महाबलः ।
तदा समाप्स्यते यज्ञो धार्तराष्ट्रस्य माधव ॥
स्नुषाश्च प्रस्नुषाश्चैव धृतराष्ट्रस्य संगताः ।
हतेश्वरा हतसुता हतनाथाश्च केशव ॥

गान्धार्या सह रोदन्त्य· श्वगृध्रकुरराकुले ।
स यज्ञेऽस्मिन्नवभृथो भविष्यति जनार्दन ।।
विद्यावृद्धा वयोवृद्धा. क्षत्रियाः क्षत्रियर्षभ ।
वृथामृत्यु न कुर्वीरस्त्वत्कृते मधुसूदन ।।
शस्त्रेण निधनं गच्छेत्समृद्ध क्षत्रमण्डलम् ।
कुरुक्षेत्रे पुण्यतमे त्रैलोक्यस्यापि केशव ।।
तदत्र पुण्डरीकाक्ष विधत्स्व यदभीप्सितम् ।
यथा कात्स्न्येंन वार्ष्णेय क्षत्र स्वर्गमवाप्नुयात् ।।
यावत्स्थास्यन्ति गिरय सरितश्च जनार्दन ।
तावत्कीर्तिभव शब्दः शाश्वतोऽयं भविष्यति ।।

सजय उवाच ।

कर्णस्य वचन श्रुत्वा केशव. परवीरहा ।
उवाच प्रहसन्वाक्यं स्मितपूर्वमिद तदा ।।
अपि त्वा न तपेत्कर्ण राज्यलाभोपपादना ।
मया दत्ता हि पृथिवी न प्रशासितुमिच्छसि ।।
ध्रुवो जय· पाण्डवानामितीद
न सशय. कश्चन विद्यतेऽत्र ।
जयध्वजो दृश्यते पाण्डवस्य
समुच्छ्रितो वानरराज उग्र. ।।
यदा द्रक्ष्यसि सग्रामे श्वेताश्व कृष्णसारथिम् ।
ऐन्द्रमस्त्र विकुर्वाणमुभे चैवाग्निमारुते ।।
गाण्डीवस्य च निर्घोष विस्फूर्जितमिवाशने. ।
न तदा भविता त्रेता न कृत द्वापर न च ।।
यदा द्रक्ष्यसि सग्रामे कुन्तीपुत्र युधिष्ठिरम् ।
जपहोमसमायुक्त स्वा रक्षन्त महाचमूम् ।।
आदित्यमिव दुर्धर्षं तपन्त शत्रुवाहिनीम् ।
न तदा भविता त्रेता न कृत द्वापरं न च ।।
यदा द्रक्ष्यसि सग्रामे भीमसेन महाबलम् ।
दु शासनस्य रुधिर पीत्वा नृत्यन्तमाहवे ।।

प्रभिन्नमिव मातङ्ग प्रतिद्विरदघातिनम् ।
न तदा भविता त्रेता न कृत द्वापर न च ।।
यदा द्रक्ष्यसि सग्रामे माद्रीपुत्रौ महारथौ ।
वाहिनी धार्तराष्ट्राणा क्षोभयन्तौ गजाविव ।।
विगाढे शस्त्रसपाते परवीररथारुजौ ।
न तदा भविता त्रेता न कृतं द्वापरं न च ।।
यदा द्रक्ष्यसि सग्रामे द्रोण शांतनव कृपम् ।
सुयोधन च राजान सैन्धव च जयद्रथम् ।।
युद्धायापततस्तूर्णं वारितान्सव्यसाचिना ।
न तदा भविता त्रेता न कृत द्वापरं न च ।।
केशवस्य तु तद्वाक्य कर्ण· श्रुत्वा हितं शुभम् ।
अब्रवीदभिसपूज्य कृष्ण मधुनिषूदनम् ।
जानन्मा कि महाबाहो संमोहयितुमिच्छसि ।।
योऽयं पृथिव्याः कात्स्न्र्येन विनाश. समुपस्थितः ।
निमित्तं तत्र शकुनिरहं दु.शासनस्तथा ।
दुर्योधनश्च नृपतिर्धृतराष्ट्रसुतोऽभवत् ।।
असंशयमिद कृष्ण महद्युद्धमुपस्थितम् ।
पाण्डवानां कुरूणा च घोरं रुधिरकर्दमम् ।।
राजानो राजपुत्राश्च दुर्योधनवशानुगा ।
रणे शस्त्राग्निना दग्धा. प्राप्स्यन्ति यमसादनम् ।।
स्वप्ना हि वहवो घोरा दृश्यन्ते मधुसूदन ।
निमित्तानि च घोराणि तथोत्पाता. सुदारुणाः ।।
पराजय धार्तराष्ट्रे विजयं च युधिष्ठिरे ।
शसन्त इव वार्ष्णेय विविधा लोमहर्षणाः ।।
पूर्वा दिग्लोहिताकारा शस्त्रवर्णा च दक्षिणा ।
आमपात्रप्रतीकाशा पश्चिमा मधुसूदन ।।
प्रदीप्ताश्च दिश सर्वा धार्तराष्ट्रस्य माधव ।
महद्भयं वेदयन्ति तस्मिन्नुत्पातलक्षणे ।।
सहस्रपाद प्रासाद स्वप्नान्ते स्म युधिष्ठिरः ।
अधिरोहन्मया दृष्ट. सह भ्रातृभिरच्युत ।।

श्वेतोष्णीषाश्च दृश्यन्ते सर्वे ते शुक्लवासस. ।
आसनानि च शुभ्राणि सर्वेषामुपलक्षये ।।
तव चापि मया कृष्ण स्वप्नान्ते रुधिराविला ।
आन्त्रेण पृथिवी दृष्टा परिक्षिप्ता जनार्दन ।।
अस्थिसचयमारूढश्चामितौजा युधिष्ठिर· ।
सुवर्णपात्र्या संहृष्टो भुक्तवान्घृतपायसम् ।।
युधिष्ठिरो मया दृष्टो ग्रसमानो वसुधराम् ।
त्वया दत्तामिमा व्यक्त भोक्ष्यते स वसुधराम् ।।
उच्च पर्वतमारूढो भीमकर्मा वृकोदर ।
गदापाणिर्नरव्याघ्रो वीक्षन्निव महीमिमाम् ।।
क्षपयिष्यति नः सर्वान्स सुव्यक्त महारणे ।
विदितं मे हृषीकेश यतो धर्मस्ततो जय ।।
पाण्डुर गजमारूढो गाण्डीवी स धनजय· ।
त्वया सार्ध हृषीकेश श्रिया परमया ज्वलन् ।।
यूय सर्वान्वधिष्यध्वं तत्र मे नास्ति संशय. ।
पार्थिवान्समरे कृष्ण दुर्योधनपुरोगमान् ।।
नकुल· सहदेवश्च सात्यकिश्च महारथ· ।
शुद्धकेयूरकण्ठत्रा· शुक्लमाल्याम्बरावृता. ।।
अधिरूढा नरव्याघ्रा नरवाहनमुत्तमम् ।
त्रय एते महामात्रा पाण्डुरच्छत्रवासस ।।
श्वेतोष्णीषाश्च दृश्यन्ते त्रय एव जनार्दन ।
धार्तराष्ट्रस्य सैन्येषु तान्विजानीहि केशव ।।
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वत ।
रक्तोष्णीषाश्च दृश्यन्ते सर्वे माधव पार्थिवा. ।।
उष्ट्रयुक्त समारूढौ भीष्मद्रोणौ जनार्दन ।
मया सार्ध महाबाहो धार्तराष्ट्रेण चाभिभो ।।
अगस्त्यशास्ता च दिश प्रयाता. स्म जनार्दन ।
अचिरेणैव कालेन प्राप्स्यामो यमसादनम् ।।
अह चान्ये च राजानो यच्च तत्क्षत्रमण्डलम् ।
गाण्डीवाग्नि प्रवेक्ष्याम इति मे नास्ति सशय ।।

कृष्ण उवाच ।

उपस्थितविनाशेय नूनमद्य वसुधरा ।
तथा हि मे वचः कर्ण नोपैति हृदय तव ।।
सर्वेषा तात भूतानां विनाशे समुपस्थिते ।
अनयो नयसंकाशो हृदयान्नापसर्पति ।।

कर्ण उवाच ।

अपि त्वा कृष्ण पश्याम जीवन्तोऽस्मान्महारणात् ।
समुत्तीर्णा महाबाहो वीरक्षयविनाशनात् ।।
अथ वा सगमः कृष्ण स्वर्गे नो भविता ध्रुवम् ।
तत्रेदानी समेष्यामः पुनः सार्ध त्वयानघ ।।

# रात्रियुद्धे दीपोद्द्योतनम्

(म० ७।१३८।१-३४)

संजय उवाच।

वर्तमाने तथा युद्धे घोररूपे भयावहे।
तमसा संवृते लोके रजसा च महीपते।
नापश्यन्त रणे योधा. परस्परमवस्थिताः ।।१
अनुमानेन संज्ञाभिर्युद्धं तद्ववृते महत्।
नरनागाश्वमथनं परम लोमहर्षणम् ।।
द्रोणकर्णकृपा वीरा भीमपार्षतसात्यकाः।
अन्योन्य क्षोभयामासु सैन्यानि नृपसत्तम ।।
वध्यमानानि सैन्यानि समन्तात्तैर्महारथैः।
तमसा रजसा चैव समन्ताद्विप्रदुद्रुवुः ।।
ते सर्वतो विद्रवन्तो योधा वित्रस्तचेतस ।
अहन्यन्त महाराज धावमानाश्च संयुगे ।।
महारथसहस्राणि जघ्नुरन्योन्यमाहवे।
अन्धे तमसि मूढानि पुत्रस्य तव मन्त्रिते ।।
ततः सर्वाणि सैन्यानि सेनागोपाश्च भारत।
व्यमुह्यन्त रणे तत्र तमसा संवृते सति ।।

धृतराष्ट्र उवाच।

तेषां संलोड्यमानानां पाण्डवैर्निहतौजसाम्।
अन्धे तमसि मग्नानामासीत्का वो मतिस्तदा ।।
कथं प्रकाशस्तेषां वा मम सैन्येषु वा पुन ।
बभूव लोके तमसा तथा संजय संवृते ।।

संजय उवाच।

ततः सर्वाणि सैन्यानि हतशिष्टानि यानि वै।
सेनागोप्तॄनथादिश्य पुनर्व्यूहमकल्पयत् ।।

द्रोणः पुरस्ताज्जघने तु शल्य-
स्तथाद्रौणि. पार्श्वतः सौबलश्च ।
स्वय तु सर्वाणि वलानि राज-
न्राजाभ्ययाद्गोपयन्वै निशायाम् ॥
उवाच सर्वाश्च पदातिसंघा-
न्दुर्योधन· पार्थिव सान्त्वपूर्वम् ।
उत्सृज्य सर्वे परमायुधानि
गृह्णीत हस्तैर्ज्वलितान्प्रदीपान् ॥
ते चोदिताः पार्थिवसत्तमेन
तत प्रहृष्टा जगृहु· प्रदीपान् ।
सा भूय एव ध्वजिनी विभक्ता
व्यरोचताग्निप्रभया निशायाम् ॥
महाधनैराभरणैश्च दिव्यैः
शस्त्रै. प्रदीप्तैरभिसपतद्भि. ।
क्षणेन सर्वे विहिता. प्रदीपा
व्यदीपयश्च ध्वजिनी तदाशु ॥
सर्वास्तु सेना व्यतिसेव्यमाना.
पदातिभिः पावकतैलहस्तैः ।
प्रकाश्यमाना ददृशुर्निशायां
यथान्तरिक्षे जलदास्तडिद्भि· ॥
प्रकाशिताया तु तथा ध्वजिन्या
द्रोणोऽग्निकल्पः प्रतपन्समन्तात् ।
रराज राजेन्द्र सुवर्णवर्मा
मध्यं गत. सूर्य इवाशुमाली ॥
जाम्बूनदेष्वाभरणेषु चैव
निष्केषु शुद्धेषु शरावरेषु ।
पीतेषु शस्त्रेषु च पावकस्य
प्रतिप्रभास्तत्र तदा वभूवु. ॥
गदाश्च शैक्याः परिघाश्च शुभ्रा
रथेषु शक्त्यश्च विवर्तमाना ।

प्रतिप्रभा रश्मिभिराजमीढ
पुनः पुनः सजनयन्ति दीपाः ।।
छत्राणि वालव्यजनानुषङ्गा
दीप्ता महोल्काश्च तथैव राजन् ।
व्याघूर्णमानाश्च सुवर्णमाला
व्यायच्छता तत्र तदा विरेजुः ।।
शस्त्रप्रभाभिश्च विराजमानं
दीपप्रभाभिश्च तदा वलं तत् ।
प्रकाशितं चाभरणप्रभाभि-
र्भृशं प्रकाशं नृपते वभूव ।।
पीतानि शस्त्राण्यसृगुक्षितानि
वीरावधूतानि तनुद्रुहाणि ।
दीप्तां प्रभां प्राजनयन्त तत्र
तपात्यये विद्युदिवान्तरिक्षे ।।
प्रकम्पितानामभिघातवेगै-
रभिघ्नतां चापततां जवेन ।
वक्त्राण्यशोभन्त तदा नराणां
वाय्वीरितानीव महाम्वुजानि ।।
महावने दाव इव प्रदीप्ते
यथा प्रभा भास्करस्यापि नश्येत् ।
तथा तवासीद्ध्वजिनी प्रदीप्ता
महाभये भारत भीमरूपा ।।
तत्सप्रदीप्तं वलमस्मदीयं
निशाम्य पार्थास्त्वरितास्तथैव ।
सर्वेषु सैन्येषु पदातिसंघा-
नचोदयस्तेऽथ चक्रुः प्रदीपान् ।।
गजे गजे सप्त कृताः प्रदीपा
रथे रथे चैव दश प्रदीपाः ।
द्वावश्वपृष्ठे परिपार्श्वतोऽन्ये
ध्वजेषु चान्ये जघनेषु चान्ये ।।

सेनासु सर्वासु च पार्श्वतोऽन्ये
पश्चात्पुरस्ताच्च समन्ततश्च ।
मध्ये तथान्ये ज्वलिताग्रहस्ताः
सेनाद्वयेऽपि स्म नरा विचेरुः ॥
सर्वेषु सैन्येषु पदातिसंघा
व्यामिश्रिता हस्तिरथाश्ववृन्दैः ।
मध्ये तथान्ये ज्वलिताग्निहस्ता
व्यदीपयन्पाण्डुसुतस्य सेनाम् ॥
तेन प्रदीप्तेन तथा प्रदीप्तं
बल तदासीद्बलवद्बलेन ।
भाः कुर्वता भानुमता ग्रहेण
दिवाकरेणाग्निशिखाभितप्तम् ॥
तयोः प्रभाः पृथिवीमन्तरिक्ष
सर्वं व्यतिक्रम्य दिशश्च वृद्धा. ।
तेन प्रकाशेन भृश प्रकाशं
बभूव तेषां तव चैव सैन्यम् ॥
तेन प्रकाशेन दिवगमेन
सबोधिता देवगणाश्च राजन् ।
गन्धर्वयक्षासुरसिद्धसंघा
समागमन्नप्सरसञ्च सर्वाः ॥
तद्देवगन्धर्वसमाकुल च
यक्षासुरेन्द्राप्सरसां गणैश्च ।
हतैश्च वीरैर्दिवमारुहद्भि-
रायोधन दिव्यकल्पं बभूव ॥
रथाश्वनागाकुलदीपदीप्त
सरब्धयोधाहतविद्रुताश्वम् ।
महद्बल व्यूढरथाश्वनागं
सुरासुरव्यूहसम बभूव ॥
तच्छक्तिसघाकुलचण्डवात
महारथाभ्रं रथवाजिघोषम् ।

शस्त्रौघवर्षं रुधिराम्बुधार
निशि प्रवृत्तं नरदेवयुद्धम् ।।
तस्मिन्महाग्निप्रतिमो महात्मा
संतापयन्पाण्डवान्विप्रमुख्य. ।
गभस्तिभिर्मध्यगतो यथार्को
वर्षात्यये तद्वदभून्नरेन्द्र ।।

# रात्रियुद्धे सैन्यनिद्रा

(म० ७।१५९।११-४८)

संजय उवाच।

ततः प्रववृते युद्ध श्रान्तवाहनसैनिकम्।
पाण्डवाना कुरूणां च गर्जतामितरेतरम्॥
निद्रान्धास्ते महाराज परिश्रान्ताश्च सयुगे।
नाभ्यपद्यन्त समरे काचिच्चेष्टां महारथाः॥
त्रियामा रजनी चैषा घोररूपा भयानका।
सहस्रयामप्रतिमा बभूव प्राणहारिणी।
वध्यता च तथा तेषां क्षतानां च विशेषतः॥
अहो रात्रि. समाजज्ञे निद्रान्धानां विशेषत :।
सर्वे ह्यासन्निरुत्साहा क्षत्रिया दीनचेतस।
तव चैव परेषां च गतास्त्रा विगतेषवः॥
ते तथा पारयन्तश्च ह्रीमन्तश्च विशेषतः।
स्वधर्ममनुपश्यन्तो न जहु. स्वामनीकिनीम्॥
शस्त्राण्यन्ये समुत्सृज्य निद्रान्धा. शेरते जनाः।
गजेष्वन्ये रथेष्वन्ये हयेष्वन्ये च भारत॥
निद्रान्धा नो बुबुधिरे काचिच्चेष्टां नराधिपा.।
तेऽन्योन्य समरे योधाः प्रेषयन्त यमक्षयम्॥
स्वप्नायमानास्त्वपरे परानिति विचेतसः।
आत्मानं समरे जघ्नु· स्वानेव च परानपि॥
नानावाचो विमुञ्चन्तो निद्रान्धास्ते महारणे।
योद्धव्यमिति तिष्ठन्तो निद्रासक्तलोचना.॥
संमर्द्यान्ये रणे केचिन्निद्रान्धाश्च परस्परम्।
जघ्नु. शूरा रणे राजंस्तस्मिंस्तमसि दारुणे॥
हन्यमानं तथात्मान परेभ्यो वहवो जना.।
नाभ्यजानन्त समरे निद्रया मोहिता भृशम्॥

तेषामेतादृशी चेष्टां विज्ञाय पुरुषर्षभः ।
उवाच वाक्य बीभत्सुरुच्चैः सनादयन्दिश ।।
श्रान्ता भवन्तो निद्रान्धा सर्वे एव सवाहना ।
तमसा चावृते सैन्ये रजसा बहुलेन च ।।
ते यूय यदि मन्यध्वमुपारमत सैनिका. ।
निमीलयत चात्रैव रणभूमौ मुहूर्तकम् ।।
ततो विनिद्रा विश्रान्ताश्चन्द्रमस्युदिते पुन. ।
ससाधयिष्यथान्योन्य स्वर्गाय कुरुपाण्डवा ।।
तद्वच सर्वधर्मज्ञा धार्मिकस्य निशम्य ते ।
अरोचयन्त सैन्यानि तथा चान्योन्यमब्रुवन् ।।
चुक्रुशु. कर्ण कर्णेति राजन्दुर्योधनेति च ।
उपारमत पाण्डूना विरता हि वरूथिनी ।।
तथा विक्रोशमानस्य फल्गुनस्य ततस्तत ।
उपारमत पाण्डूना सेना तव च भारत ।।
तामस्य वाच देवाश्च ऋषयश्च महात्मनः ।
सर्वसैन्यानि चाक्षुद्रा. प्रहृष्टाः प्रत्यपूजयन् ।।
तत्संपूज्य वचोऽक्रूर सर्वसैन्यानि भारत ।
मुहूर्तमस्वपन्राजञ्श्रान्तानि भरतर्षभ ।।
सा तु संप्राप्य विश्राम ध्वजिनी तव भारत ।
सुखमाप्तवती वीरमर्जुनं प्रत्यपूजयत् ।।
त्वयि वेदास्तथास्त्राणि त्वयि बुद्धिपराक्रमौ ।
धर्मस्त्वयि महाबाहो दया भूतेषु चानघ ।।
यच्चाश्वस्तास्तवेच्छाम. शर्म पार्थ तदस्तु ते ।
मनसश्च प्रियानर्थान्वीर क्षिप्रमवाप्नुहि ।।
इति ते तं नरव्याघ्र प्रशसन्तो महारथा ।
निद्रया समवाक्षिप्तास्तूष्णीमासन्विशा पते ।।
अश्वपृष्ठेषु चाप्यन्ये रथनीडेषु चापरे ।
गजस्कन्धगताश्चैव शेरते चापरे क्षितौ ।।
सायुधा सगदाश्चैव सखड्गा. सपरश्वधा ।
सप्रासकवचाश्चान्ये नरा सुप्ता पृथक्पृथक् ।।

गजास्ते पन्नगाभोगैर्हस्तैर्भूरेणुरूषितैः ।
निद्रान्धा वसुधां चक्रुर्घ्राणनिश्वासशीतलाम् ।।
गजा. शुशुभिरे तत्र नि.श्वसन्तो महीतले ।
विशीर्णा गिरयो यद्वन्नि.श्वसद्भिर्महोरगैः ।।
समां च विषमा चक्रु खुराग्रैर्विक्षता महीम् ।
हया· काञ्चनयोक्त्राश्च केसरालम्बिभिर्युगैः ।।
सुषुपुस्तत्र राजेन्द्र युक्ता वाहेषु सर्वश· ।।
तत्तथा निद्रया भग्नमवाचमस्वपद्वलम् ।
कुशलैरिव विन्यस्त पटे चित्रमिवाद्भुतम् ।।
तत· कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ।।
ततो मुहूर्ताद्भगवान्पुरस्ताच्छशलक्षण ।
अरुणं दर्शयामास ग्रसञ्ज्योति·प्रभ प्रभु· ।।
अरुणस्य तु तस्यानुजातरूपसमप्रभम् ।
रश्मिजाल महच्चन्द्रो मन्द मन्दमवासृजत् ।।
उत्सारयन्तः प्रभया तमस्ते चन्द्ररश्मय· ।
पर्यगच्छञ्शनैः सर्वा दिशः खं च क्षिति तथा ।।
ततो मुहूर्ताद्भुवन ज्योतिर्भूतमिवाभवत् ।
अप्रख्यमप्रकाश च जगामाशु तमस्तथा ।।
प्रतिप्रकाशिते लोके दिवाभूते निशाकरे ।
विचेरुर्न विचेरुश्च राजन्नक्तचरास्तत· ।।
बोध्यमान तु तत्सैन्यं राजश्चन्द्रस्य रश्मिभि. ।
बुबुधे शतपत्राणा वन महदिवाम्भसि ।।
यथा चन्द्रोदयोद्धूत. क्षुभितः सागरो भवेत् ।
तथा चन्द्रोदयोद्धूत. स बभूव बलार्णव ।।

# संसारगहनम्

(म० ११।५)

धृतराष्ट्र उवाच।

यदिदं धर्मगहन बुद्धया समनुगम्यते।
तद्धि विस्तरश· सर्व बुद्धिमार्ग प्रशस मे॥

विदुर उवाच।

अत्र ते वर्तयिष्यामि नमस्कृत्वा स्वयभुवे।
यथा ससारगहन वदन्ति परमर्षय·॥
कश्चिन्महति ससारे वर्तमानो द्विज. किल।
वनं दुर्गमनुप्राप्तो महत्क्रव्यादसकुलम्॥
सिंहव्याघ्रगजाकारैरतिघोरैर्महाशनै ।
समन्तात्सपरिक्षिप्त मृत्योरपि भयप्रदम्॥
तदस्य दृष्ट्वा हृदयमुद्वेगमगमत्परम्।
अभ्युच्छ्रयश्च रोम्णा वै विक्रियाश्च परतप॥
स तद्वन व्यनुसरन्सप्रधावन्नितस्तत.।
वीक्षमाणो दिश: सर्वा· शरण क्व भवेदिति॥
स तेषा छिद्रमन्विच्छन्प्रद्रुतो भयपीडित:।
न च निर्याति वै दूर न च तैर्विप्रयुज्यते॥
अथापश्यद्वनं घोर समन्ताद्वागुरावृतम्।
बाहुभ्या सपरिष्वक्त स्त्रिया परमघोरया॥
पञ्चशीर्षधरैर्नागै. शैलैरिव समुन्नतै ।
नभ स्पृशैर्महावृक्षै. परिक्षिप्त महावनम्॥
वनमध्ये च तत्राभूदुदपान समावृत ।
वल्लीभिस्तृणच्छन्नाभिर्गुढाभिरभिसवृत·॥
पपात स द्विजस्तत्र निगूढे सलिलाशये।
विलग्नश्चाभवत्तस्मिँल्लतासतानसकटे॥

पनसस्य यथा जात वृन्तबद्ध महाफलम् ।
स तथा लम्बते तत्र ऊर्ध्वपादो ह्यध:शिराः ।।
अथ तत्रापि चान्योऽस्य भूयो जात उपद्रव. ।
कूपपीनाहवेलायामपश्यत महागजम् ।।
षड्वक्त्रं कृष्णशबल द्विषट्कपदचारिणम् ।
क्रमेण परिसर्पन्त वल्लीवृक्षसमावृतम् ।।
तस्य चापि प्रशाखासु वृक्षशाखावलम्बिनः ।
नानारूपा मधुकरा घोररूपा भयावहाः ।
आसते मधु संवृत्य पूर्वमेव निकेतजा. ।।
भूयो भूयः समीहन्ते मधूनि भरतर्षभ ।
स्वादनीयानि भूताना न यैर्बालोऽपि तृप्यते ।।
तेषां मधूनां बहुधा धारा प्रस्रवते सदा ।।
ता लम्बमानः स पुमान्धारा पिबति सर्वदा ।
न चास्य तृष्णा विरता पिबमानस्य संकटे ।।
अभीप्सति च ता नित्यमतृप्तः स पुनः पुन ।
न चास्य जीविते राजन्निर्वेद. समजायत ।।
तत्रैव च मनुष्यस्य जीविताशा प्रतिष्ठिता ।
कृष्णाः श्वेताश्च त वृक्ष कुट्टयन्ति स्म मूषका. ।।
व्यालैश्च वनदुर्गान्ते स्त्रिया च परमोग्रया ।
कूपाधस्ताच्च नागेन वीनाहे कुञ्जरेण च ।।
वृक्षप्रपाताच्च भयं मूषकेभ्यश्च पञ्चमम् ।
मधुलोभान्मधुकरै षष्ठमाहुर्महद्भयम् ।।
एव स वसते तत्र क्षिप्तः संसारसागरे ।
न चैव जीविताशाया निर्वेदमुपगच्छति ।।

# गृध्रजम्बुकसंवादः

(म० १२।१४९)

भीष्म उवाच।

शृणु पार्थ यथावृत्तमितिहास पुरातनम्।
गृध्रजम्बुकसवाद यो वृत्तो वैदिशे पुरा॥
दु.खिता. केचिदादाय बालमप्राप्तयौवनम्।
कुलसर्वस्वभूतं वै रुदन्त शोकविह्वला.॥
बाल मृतं गृहीत्वाथ श्मशानाभिमुखाः स्थिताः।
अङ्केनाङ्कं च सक्रम्य रुरुदुर्भूतले तदा॥
तेषा रुदितशब्देन गृध्रोऽभ्येत्य वचोऽब्रवीत्।
एकात्मकमिमं लोके त्यक्त्वा गच्छत माचिरम्॥
इह पुसां सहस्राणि स्त्रीसहस्राणि चैव हि।
समानीतानि कालेन कि ते वै ज्ञातबान्धवा.॥
संपश्यत जगत्सर्वं सुखदु.खैरधिष्ठितम्।
संयोगो विप्रयोगश्च पर्यायेणोपलभ्यते॥
गृहीत्वा ये च गच्छन्ति येऽनुयान्ति च तान्मृतान्।
तेऽप्यायुषः प्रमाणेन स्वेन गच्छन्ति जन्तव.॥
अल स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसकुले।
कङ्कालबहुले घोरे सर्वप्राणिभयकरे॥
न पुनर्जीवित· कश्चित्कालधर्ममुपागत ।
प्रियो वा यदि वा द्वेष्यः प्राणिना गतिरीदृशी।
सर्वेण खलु मर्तव्य मर्त्यलोके प्रसूयता।
कृतान्तविहिते मार्गे को मृत जीवयिष्यति॥
कर्मान्तविहिते लोके चास्त गच्छति भास्करे।
गम्यता स्वमधिष्ठान सुतस्नेह विसृज्य वै॥
ततो गृध्रवच. श्रुत्वा विक्रोशन्तस्तदा नृप।
बान्धवास्तेऽभ्यगच्छन्त पुत्रमुत्सृज्य भूतले॥

विनिश्चित्याथ च तत. सत्यजन्तः स्वमात्मजम् ।
निराशा जीविते तस्य मार्गमारुह्य धिष्ठिता. ।।
ध्वाङ्क्षाभ्रसमवर्णस्तु बिलान्नि.सृत्य जम्बुकः ।
गच्छमानान्स्म तानाह निर्घृणा. खलु मानवाः ।।
आदित्योऽयं स्थितो मूढाः स्नेह कुरुत मा भयम् ।
वहुरूपो मुहूर्तश्च जीवेतापि कदाचन ।।
यूयं भूमौ विनिक्षिप्य पुत्रस्नेहविनाकृताः ।
श्मशाने पुत्रमुत्सृज्य कस्माद्गच्छथ निर्घृणाः ।।
न वोऽस्त्यस्मिन्सुते स्नेहो बाले मधुरभाषिणि ।
यस्य भाषितमात्रेण प्रसादमुपगच्छथ ।।
चिरं मुञ्चत वाष्प च चिरं स्नेहेन पश्यत ।
एवविधानि हीष्टानि दुस्त्यजानि विशेषत. ।।
क्षीणस्याथाभियुक्तस्य श्मशानाभिमुखस्य च ।
बान्धवा यत्र तिष्ठन्ति तत्रान्यो नावतिष्ठते ।।
सर्वस्य दयिता· प्राणाः सर्व· स्नेह च विन्दति ।
तिर्यग्योनिष्वपि सता स्नेह पश्यत यादृशम् ।।
त्यक्त्वा कथं गच्छथेम पद्मलोलायताक्षकम् ।।
यथा नवोद्वाहकृतं स्नानमाल्यविभूषितम् ।।

भीष्म उवाच ।

जम्बुकस्य वचः श्रुत्वा कृपण परिदेवतः ।
न्यवर्तन्त तदा सर्वे शवार्थ ते स्म मानुपा. ।।

गृध्र उवाच ।

अहो धिक्सुनृशसेन जम्बुकेनाल्पमेधसा ।
क्षुद्रेणोक्ता हीनसत्त्वा मानुषा· किं निवर्तथ ।।
पञ्चभूतपरित्यक्तं शून्य काष्ठत्वमागतम् ।
कस्माच्छोचथ निश्चेष्टमात्मान किं न शोचथ ।।
तपः कुरुत वै तीव्र मुच्यध्वं येन किल्विषात् ।
तपसा लभ्यते सर्व विलाप. किं करिष्यति ।।

प्राज्ञो वा यदि वा मूर्खः सधनो निर्धनोऽपि वा ।
सर्वः कालवशं याति शुभाशुभसमन्वितः ॥
किं करिष्यथ शोचित्वा मृतं किमनुशोचथ ।
सर्वस्य हि प्रभुः कालो धर्मतः समदर्शनः ॥
यौवनस्थांश्च बालांश्च वृद्धान्गर्भगतानपि ।
सर्वानाविशते मृत्युरेवंभूतमिदं जगत् ॥

जम्बुक उवाच ।

इमं कनकवर्णाभं भूषणैः समलङ्कृतम् ।
गृध्रवाक्यात्कथं पुत्रं त्यजध्वं पितृपिण्डदम् ॥
न स्नेहस्य विरोधोऽस्ति विलापरुदितस्य वै ।
मृतस्यास्य परित्यागात्तापो वो भविता ध्रुवम् ॥
श्रूयते शम्बुके शूद्रे हते ब्राह्मणदारकः ।
जीवितो धर्ममासाद्य रामात्सत्यपराक्रमात् ॥
तथा श्वेतस्य राजर्षेर्बालो दिष्टान्तमागतः ॥
श्वोऽभूते धर्मनित्येन मृतः सञ्जीवितः पुनः ॥
तथा कश्चिद्भवेत्सिद्धो मुनिर्वा देवतापि वा ।
कृपणानामनुक्रोशं कुर्याद्वो रुदतामिह ॥

भीष्म उवाच ।

इत्युक्ताः संन्यवर्तन्त शोकार्ताः पुत्रवत्सलाः ।
अङ्के शिरः समाधाय रुरुदुर्बहुविस्तरम् ॥

गृध्र उवाच ।

अलं निर्बन्धमागम्य शोकस्य परिवारणम् ।
अप्रत्ययं कुतो ह्यस्य पुनरद्येह जीवितम् ॥
नैष जम्बुकवाक्येन पुनः प्राप्स्यति जीवितम् ।
मृतस्योत्सृष्टदेहस्य पुनर्देहो न विद्यते ॥
न वै मूर्तिप्रदानेन न जम्बुकशतैरपि ।
शक्यो जीवयितुं ह्येष बालो वर्षशतैरपि ॥

अपि रुद्रः कुमारो वा ब्रह्मा वा विष्णुरेव वा ।।
वरमस्मै प्रयच्छेयुस्ततो जीवेदयं शिशुः ।।
न च बाष्पविमोक्षेण न चाश्वासकृतेन वै ।
न दीर्घरुदितेनेह पुनर्जीवो भविष्यति ।।

भीष्म उवाच ।

इत्युक्तास्तं सुतं त्यक्त्वा भूमौ शोकपरिप्लुता. ।
दह्यमानाः सुतस्नेहात्प्रययुर्बान्धवा गृहान् ।।

जम्बुक उवाच ।

दारुणो मर्त्यलोकोऽय सर्वप्राणिविनाशन. ।
इष्टबन्धुवियोगश्च तथैवाल्प च जीवितम् ।।
बह्वलीकमसत्य च प्रतिवादाप्रियवदम् ।
इम प्रेक्ष्य पुनर्भावं दु.खशोकाभिवर्धनम् ।।
न मे मानुषलोकोऽय मुहूर्तमपि रोचते ।
अहो धिग्गृध्रवाक्येन सनिवर्तथ मानुषा. ।।
प्रदीप्ता. पुत्रशोकेन यथैवाबुद्धयस्तथा ।
कथं गच्छथ सस्नेहाः सुतस्नेह विसृज्य च ।
श्रुत्वा गृध्रस्य वचन पापस्येहाकृतात्मन. ।।
सुखस्यानन्तरं दुःख दु.खस्यानन्तरं सुखम् ।
सुखदु.खान्विते लोके नेहास्त्येकमनन्तकम् ।।
इम क्षितितले न्यस्य बाल रूपसमन्वितम् ।
कुलशोकाकर मूढा पुत्र त्यक्त्वा क्व यास्यथ ।।
रूपयौवनसंपन्नं द्योतमानमिव श्रिया ।
जीवन्तमेन पश्यामि मनसा नात्र सशयः ।।
विनाशश्चाप्यनर्होऽस्य सुख प्राप्स्यथ मानुषाः ।
पुत्रशोकाग्निदग्धानां मृतमप्यद्य वः क्षमम् ।।
दुःखसंभावनां कृत्वा धारयित्वा स्वयं सुखम् ।
त्यक्त्वा गमिष्यथ क्वाद्य समुत्सृज्याल्पबुद्धिवत् ।।

भीष्म उवाच।

तथा धर्मविरोधेन प्रियमिथ्याभिध्यायिना।
श्मशानवासिना नित्यं रात्रिं मृगयता तदा॥
ततो मध्यस्थता नीता वचनैरमृतोपमैः।
जम्बुकेन स्वकार्यार्थं बान्धवास्तस्य धिष्ठिता॥

गृध्र उवाच।

अयं प्रेतसमाकीर्णो यक्षराक्षससेवितः।
दारुणः काननोद्देशः कौशिकैरभिनादितः॥
भीमः सुघोरश्च तथा नीलमेघसमप्रभः।
अस्मिञ्शवं परित्यज्य प्रेतकार्याण्युपासत॥
भानुर्यावन्न यात्यस्तं यावच्च विमला दिशः।
तावदेनं परित्यज्य प्रेतकार्याण्युपासत॥
नन्दन्ति परुषं श्येनाः शिवाः क्रोशन्ति दारुणाः।
मृगेन्द्राः प्रतिनन्दन्ति रविरस्तं च गच्छति॥
चिताधूमेन नीलेन संरज्यन्ते च पादपाः।
श्मशाने च निराहाराः प्रतिनन्दन्ति देहिनः॥
सर्वे विक्रान्तवीर्याश्च अस्मिन्देशे सुदारुणाः॥
युष्मान्प्रधर्षयिष्यन्ति विकृता मांसभोजनाः॥
दूराच्चायं वनोद्देशो भयमत्र भविष्यति।
त्यज्यतां काष्ठभूतोऽयं मृष्यतां जाम्बुकं वचः॥
यदि जम्बुकवाक्यानि निष्फलान्यनृतानि च।
श्रोष्यथ भ्रष्टविज्ञानास्ततः सर्वे विनङ्क्ष्यथ॥

जम्बुक उवाच।

स्थीयतां नेह भेतव्यं यावत्तपति भास्करः।
तावदस्मिन्सुतस्नेहादनिर्वेदेन वर्तत॥
स्वैरं रुदत विस्रब्धाः स्वैरं स्नेहेन पश्यत।
स्थीयतां यावदादित्यः किं वः क्रव्यादभाषितैः॥

यदि गृध्रस्य वाक्यानि तीव्राणि रभसानि च ।
गृह्णीत मोहितात्मान सुतो वो न भविष्यति ।।

भीष्म उवाच ।

गृध्रोऽनस्तमिते त्वाह गतेऽस्तमिति जम्बुकः ।
मृतस्य त परिजनमूचतुस्तौ क्षुधान्वितौ ।।
स्वकार्यदक्षिणौ राजन्गृध्रो जम्बुक एव च ।
क्षुत्पिपासापरिश्रान्तौ शास्त्रमालम्ब्य जल्पतः ।।
तयोर्विज्ञानविदुषोर्द्वयोर्जम्बुकपत्रिणोः ।
वाक्यैरमृतकल्पैर्हि प्रातिष्ठन्त व्रजन्ति च ।।
शोकदैन्यसमाविष्टा रुदन्तस्तस्थिरे तदा ।
स्वकार्यकुशलाभ्या ते सभ्राम्यन्ते ह नैपुणात् ।।
तथा तयोर्विवदतोर्विज्ञानविदुषोर्द्वयोः ।
वान्धवाना स्थिताना च उपातिष्ठत शकरः ।।
ततस्तानाह मनुजान्वरदोऽस्मीति शूलभृत् ।
ते प्रत्यूचुरिद वाक्य दु खिता. प्रणता. स्थिताः ।।
एकपुत्रविहीनाना सर्वेषा जीवितार्थिनाम् ।
पुत्रस्य नो जीवदानाज्जीवित दातुमर्हसि ।।
एवमुक्त· स भगवान्वारिपूर्णेन पाणिना ।
जीव तस्मै कुमाराय प्रादाद्वर्षशताय वै ।।
तथा गोमायुगृध्राभ्यामददत्क्षुद्विनाशनम् ।
वर पिनाकी भगवान्सर्वभूतहिते रतः ।।

# मृत्यूपाख्यानम्

(म० १२।२४८।७-२५०।४१)

भीष्म उवाच ।

पुरा कृतयुगे तात राजासीदविकम्पक ।
स शत्रुवशमापन्न. सग्रामे क्षीणवाहन ।।
तस्य पुत्रो हरिर्नाम नारायणसमो वले ।
स शत्रुभिर्हत: सख्ये सवल सपदानुगः ।।
स राजा शत्रुवशग पुत्रशोकसमन्वित. ।
यदृच्छया शान्तिपरो ददर्श भुवि नारदम् ।
स तस्मै सर्वमाचष्ट यथा वृत्त जनेश्वरः ।
शत्रुभिर्ग्रहण सख्ये पुत्रस्य मरण तथा ।।
तस्य तद्वचनं श्रुत्वा नारदोऽथ तपोधन. ।
आख्यानमिदमाचष्ट पुत्रशोकापह तदा ।।
राजञ्शृणु समाख्यानमद्येद वहुविस्तरम् ।
यथा वृत्त श्रुत चैव मयापि वसुधाधिप ।।
प्रजा सृष्ट्वा महातेजा' प्रजासर्गे पितामह ।
अतीव वृद्धा वहुला नामृष्यत पुन प्रजा ।।
न ह्यन्तरमभूत्किंचित्क्वचिज्जन्तुभिरच्युत ।
निरुच्छ्वासमिवोन्नद्ध त्रैलोक्यमभवन्नृप ।।
तस्य चिन्ता समुत्पन्ना सहार प्रति भूपते ।
चिन्तयन्नाव्यगच्छच्च सहारे हेतुकारणम् ।।
तस्य रोपान्महाराज खेभ्योऽग्निरुदतिष्ठत ।
तेन सर्वा दिशो राजन्ददाह स पितामह ।।
ततो दिव भुव ख च जगच्च सचराचरम् ।
ददाह पावको राजन्भगवत्कोपसभव ।।
तत्रादह्यन्त भूतानि जङ्गमानि ध्रुवाणि च ।
महता कोपवेगेन कुपिते प्रपितामहे ।।

ततो हरिजटः स्थाणुर्वेदाध्वरपतिः शिवः।
जगाद शरण देवो ब्रह्माणं परवीरहा ॥
तस्मिन्नभिगते स्थाणौ प्रजानां हितकाम्यया।
अब्रवीद्वरदो देवो ज्वलन्निव तदा शिवम् ॥
करवाण्यद्य कं काम वरार्होऽसि मतो मम।
कर्ता ह्यस्मि प्रियं शभो तव यद्धृदि वर्तते ॥

स्थाणुरुवाच।

प्रजासर्गनिमित्त मे कार्यवत्तामिमां प्रभो।
विद्धि सृष्टास्त्वया हीमा मा कुप्यासा पितामह ॥
तव तेजोग्निना देव प्रजा दह्यन्ति सर्वशः।
ता दृष्ट्वा मम कारुण्य मा कुप्यासां जगत्प्रभो।

प्रजापतिरुवाच।

न कुप्ये न च मे कामो न भवेरन्प्रजा इति।
लाघवार्थं धरण्यास्तु ततः सहार इष्यते ॥
इय हि मा सदा देवी भारार्ता समचोदयत्।
संहारार्थ महादेव भारेणाप्सु निमज्जति ॥
यदाह नाधिगच्छामि वुद्धया वहु विचारयन्।
सहारमासां वृद्धानां ततो मां क्रोध आविशत् ॥

स्थाणुरुवाच।

सहारान्तं प्रसीदस्व मा क्रुधस्त्रिदशेश्वर।
मा प्रजाः स्थावर चैव जङ्गम च विनीनशः ॥
पल्वलानि च सर्वाणि सर्वं चैव तृणोलपम्।
स्थावर जङ्गम चैव भूतग्राम चतुर्विधम् ॥
तदेतद्भस्मसाद्भूत जगत्सर्वमुपप्लुतम्।
प्रसीद भगवन्सावो वर एप वृतो मया ॥
नष्टा न पुनरेप्यन्ति प्रजा ह्येताः कथंचन।
तस्मान्निवर्त्यतामेतत्तेजः स्वेनैव तेजसा ॥

उपायमन्यं संपश्य प्रजाना हितकाम्यया ।
यथेमे जन्तवः सर्वे निवर्तेरन्परतप ॥
अभावमभिगच्छेयुरुत्सन्नप्रजना. प्रजा. ।
अधिदैवनियुक्तोऽस्मि त्वया लोकेष्विहेश्वर ॥
त्वद्भवं हि जगन्नाथ जगत्स्थावरजङ्गमम् ।
प्रसाद्य त्वां महादेव याचाम्यावृत्तिजा. प्रजा. ॥

नारद उवाच ।

श्रुत्वा तु वचन देव. स्थाणोर्नियतवाङ्मना ।
तेजस्तत्स्व निजग्राह पुनरेवान्तरात्मना ॥
ततोऽग्निमुपसंगृह्य भगवाँल्लोकपूजित. ।
प्रवृत्तिं च निवृत्तिं च कल्पयामास वै प्रभु. ॥
उपसहरतस्तस्य तमग्नि रोषज तदा ।
प्रादुर्बभूव विश्वेभ्य: खेभ्यो नारी महात्मन ॥
कृष्णा रक्ताम्बरधरा रक्तनेत्रतलान्तरा ।
दिव्यकुण्डलसपन्ना दिव्याभरणभूषिता ॥
सा विनि.सृत्य वै खेभ्यो दक्षिणामाश्रिता दिशम् ॥
ददृशातेऽथ तौ कन्या देवौ विश्वेश्वरावुभौ ॥
तामाहूय तदा देवो लोकानामादिरीश्वर ।
मृत्यो इति महीपाल जहि चेमा. प्रजा इति ॥
त्वं हि संहारबुद्ध्या मे चिन्तिता रुषितेन च ।
तस्मात्सहर सर्वास्त्व प्रजा. सजडपण्डिता ॥
अविशेषेण चैव त्व प्रजा सहर भामिनि ।
मम त्व हि नियोगेन श्रेय परमवाप्स्यसि ॥
एवमुक्ता तु सा देवी मृत्यु कमलमालिनी ।
प्रदध्यौ दु खिता वाला साश्रुपातमतीव हि ।
पाणिभ्यां चैव जग्राह तान्यश्रूणि जनेश्वर. ।
मानवाना हितार्थाय ययाचे पुनरेव च ॥
विनीय दु.खमबला सा त्वतीवायतेक्षणा ।
उवाच प्राञ्जलिर्भूत्वा लतेवावर्जिता तदा ॥

त्वया सृष्टा कथं नारी मादृशी वदता वर ।
रौद्रकर्माभिजायेत सर्वप्राणिभयकरी ।।
बिभेम्यहमधर्मस्य धर्म्यमादिश कर्म मे ।
त्वं मा भीतामवेक्षस्व शिवेनेश्वर चक्षुषा ।।
बालान्वृद्धान्वयःस्थाश्च न हरेयमनागस. ।
प्राणिनः प्राणिनामीश नमस्तेऽभिप्रसीद मे ।।
प्रियान्पुत्रान्वयस्याश्च भ्रातॄन्मातृ· पितॄनपि ।
अपध्यास्यन्ति यद्देव मृतांस्तेषा बिभेम्यहम् ।।
कृपणाश्रुपरिक्लेदो दहेन्मां शाश्वती समा. ।
तेभ्योऽहं वलवद्भीता शरण त्वामुपागता ।।
यमस्य भवने देव यात्यन्ते पापकर्मिण. ।
प्रसादये त्वा वरद प्रसाद कुरु मे प्रभो ।।
एतमिच्छाम्यह काम त्वत्तो लोकपितामह ।
इच्छेय त्वत्प्रसादाच्च तपस्तप्तु सुरेश्वर ।।

पितामह उवाच ।

मृत्यो संकल्पिता मे त्वं प्रजासहारहेतुना ।
गच्छ सहर सर्वास्त्वं प्रजा मा च विचारय ।।
एतदेवमवश्य हि भविता नैतदन्यथा ।
क्रियतामनवद्याङ्गि यथोक्त मद्वचोऽनघे ।

नारद उवाच ।

एवमुक्ता महावाहो मृत्यु परपुरजय ।
न व्याजहार तस्थौ च प्रह्वा भगवदुन्मुखी ।।
पुन पुनरथोक्ता सा गतसत्त्वेव भामिनी ।
तूष्णीमासीत्ततो देवो देवानामीश्वरेश्वरः ।।
प्रससाद किल ब्रह्मा स्वयमेवात्मनात्मवान् ।
स्मयमानश्च लोकेशो लोकान्सर्वानवैक्षत ।।
निवृत्तरोपे तस्मिस्तु भगवत्यपराजिते ।
सा कन्यापजगामास्य समीपादिति न. श्रुतम् ।।

अपसृत्याप्रतिश्रुत्य प्रजासंहरण तदा ।
त्वरमाणेव राजेन्द्र मृत्युर्धेनुकमभ्ययात् ।।
सा तत्र परमं देवी तपोऽचरत दुश्चरम् ।
समा ह्येकपदे तस्थौ दश पद्मानि पञ्च च ।।
ता तथा कुर्वती तत्र तप परमदुश्चरम् ।
पुनरेव महातेजा ब्रह्मा वचनमब्रवीत् ।।
कुरुष्व मे वचो मृत्यो तदनादृत्य सत्वरा ।
तथैवैकपदे तात पुनरन्यानि सप्त सा ।।
तस्थौ पद्मानि षट् चैव पञ्च द्वे चैव मानद ।
भूय पद्मायुतं तात मृगै. सह चचार सा ।।
पुनर्गत्वा ततो राजन्मौनमातिष्ठदुत्तमम् ।
अप्सु वर्षसहस्राणि सप्त चैक च पार्थिव ।।
ततो जगाम सा कन्या कौशिकी भरतर्षभ ।
तत्र वायुजलाहारा चचार नियम पुन. ।।
ततो ययौ महाभागा गङ्गा मेरु च केवलम् ।
तस्थौ दार्विव निश्चेष्टा भूतानां हितकाम्यया ।।
ततो हिमवतो मूर्ध्नि यत्र देवा. समीजिरे ।
तत्राङ्गुष्ठेन राजेन्द्र निखर्वमपर तत ।
तस्थौ पितामह चैव तोषयामास यत्नत ।।
ततस्तामब्रवीत्तत्र लोकाना प्रभवाप्यय. ।
किमिदं वर्तते पुत्रि क्रियता तद्वचो मम ।।
ततोऽब्रवीत्पुनर्मृत्युर्भगवन्त पितामहम् ।
न हरेय प्रजा देव पुनस्त्वाह प्रसादये ।।
तामधर्मभयत्रस्ता पुनरेव च याचतीम् ।
तदाब्रवीद्देवदेवो निगृह्येद वचस्तत ।।
अधर्मो नास्ति ते मृत्यो संयच्छेमा प्रजा शुभे ।
मया ह्युक्तं मृषा भद्रे भविता नेह किचन ।।
धर्म सनातनश्च त्वामिहैवानुप्रवेक्ष्यते ।
अह च विवुधाश्चैव त्वद्धिते निरता. सदा ।।
इममन्य च ते काम ददामि मनसेप्सितम् ।

न त्वा दोषेण यास्यन्ति व्याधिसपीडिता. प्रजाः ।।
पुरुषेपु च रूपेण पुरुषस्त्वं भविष्यसि ।
स्त्रीपु स्त्रीरूपिणी चैव तृतीयेषु नपुसकम् ।।
सैवमुक्ता महाराज कृताञ्जलिरुवाच ह ।
पुनरेव महात्मानं नेति देवेशमव्ययम् ।।
तामब्रवीत्तदा देवो मृत्यो संहर मानवान् ।
अधर्मस्ते न भविता तथा ध्यास्याम्यह शुभे ।।
यानश्रुविन्दून्पतितानपश्य
ये पाणिभ्या धारितास्ते पुरस्तात् ।
ते व्याधयो मानवान्घोररूपाः
प्राप्ते काले पीडयिष्यन्ति मृत्यो ।।
सर्वेषा त्व प्राणिनामन्तकाले
कामक्रोधौ सहितौ योजयेथाः ।
एव धर्मस्त्वामुपैष्यत्यमेयो
न चाधर्म लप्स्यसे तुल्यवृत्ति. ।।
एवं धर्म पालयिष्यस्यथोक्तं
न चात्मान मज्जयिष्यस्यधर्मे ।
तस्मात्काम रोचयाभ्यागत त्वं
सयोज्याथो संहरस्वेह जन्तून् ।।
सा वै तदा मृत्युसज्ञापदेशा-
च्छापाद्भीता वाढमित्यब्रवीत्तम् ।
अथो प्राणान्प्राणिनामन्तकाले
कामक्रोधौ प्राप्य निर्मोह्य हन्ति ।।
मृत्योर्ये ते व्याधयश्चाश्रुपाता
मनुष्याणा रुज्यते यै. शरीरम् ।
सर्वेषा वै प्राणिना प्राणनान्ते
तस्माच्छोक मा कृथा वुध्य वुद्ध्या ।।
सर्वे देवाः प्राणिना प्राणनान्ते
गत्वा वृत्ताः सनिवृत्तास्तथैव ।
एवं सर्वे मानवाः प्राणनान्ते

गत्वावृत्ता देववद्राजसिंह ।।
वायुर्भीमो भीमनादो महौजा.
सर्वेषां च प्राणिनां प्राणभूत: ।
नानावृत्तिर्देहिनां देहभेदे
तस्माद्वायुर्देवदेवो विशिष्टः ।।
सर्वे देवा मर्त्यसंज्ञाविशिष्टा
सर्वे मर्त्या देवसंज्ञाविशिष्टा. ।
तस्मात्पुत्र मा शुचो राजसिंह
पुत्रः स्वर्गं प्राप्य ते मोदते ह ।।
एवं मृत्युर्देवसृष्टा प्रजानां
प्राप्ते काले संहरन्ती यथावत् ।
तस्याश्चैव व्याधयस्तेऽश्रुपाता.
प्राप्ते काले संहरन्तीह जन्तून् ।।

# गौतमीलुब्धकव्यालमृत्युकालसंवादः

(म १३।१।३–८३)

युधिष्ठिर उवाच।

शराचितशरीर हि तीव्रव्रणमुदीक्ष्य च।
शर्म नोपलभे वीर दुष्कृतान्येव चिन्तयन्॥
रुधिरेणावसिक्ताङ्ग प्रस्रवन्त यथाचलम्।
त्वा दृष्ट्वा पुरुषव्याघ्र सीदे वर्षास्विवाम्बुजम्।
अत. कष्टतर कि नु मत्कृते यत्पितामहः।
इमामवस्था गमित. प्रत्यमित्रै रणाजिरे॥
तथा चान्ये नृपतयः सहपुत्रा सवान्धवाः।
मत्कृते निधन प्राप्ता किं नु कष्टतर तत॥
वय हि धार्तराष्ट्राश्च कालमन्युवशंगताः।
कृत्वेद निन्दित कर्म प्राप्स्याम का गति नृप॥
इद तु धार्तराष्ट्रस्य श्रेयो मन्ये जनाधिप।
इमामवस्थां सप्राप्त यदसौ त्वा न पश्यति॥
सोऽह तव ह्यन्तकर सुहृद्वधकरस्तथा।
न शान्तिमधिगच्छामि पश्यस्त्वा दु.खितं क्षितौ॥
दुर्योधनो हि समरे सहसैन्य सहानुजः।
निहत क्षत्रधर्मेऽस्मिन्दुरात्मा कुलपासनः॥
न स पश्यति दुष्टात्मा त्वामद्य पतित क्षितौ।
अतः श्रेयो मृत मन्ये नेह जीवितमात्मन.॥
अह हि समरे वीर गमित शत्रुभि क्षयम्।
अभविष्य यदि पुरा सह भ्रातृभिरच्युत॥
न त्वामेव सुदु.खार्तमद्राक्षं सायकार्दितम्।
नूनं हि पापकर्माणो धात्रा सृष्टा स्म हे नृप॥
अन्यस्मिन्नपि लोके वै यथा मुच्येम किल्बिषात्।
तथा प्रशाधि मा राजन्मम चेदिच्छसि प्रियम्॥

भीष्म उवाच।

परतन्त्रं कथं हेतुमात्मानमनुपश्यसि।
कर्मणां हि महाभाग सूक्ष्मं ह्येतदतीन्द्रियम्॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
संवादं मृत्युगौतम्यो काललुब्धकपन्नगैः॥
गौतमी नाम कौन्तेय स्थविरा शमसंयुता।
सर्पेण दष्टं स्वं पुत्रमपश्यद्गतचेतनम्॥
अथ तं स्नायुपाशेन बद्ध्वा सर्पममर्षितः।
लुब्धकोऽर्जुनको नाम गौतम्याः समुपानयत्॥
स चाब्रवीदयं ते स पुत्रहा पन्नगाधमः।
ब्रूहि क्षिप्रं महाभागे वध्यतां केन हेतुना॥
अग्नौ प्रक्षिप्यतामेष च्छिद्यतां खण्डशोऽपि वा।
न ह्ययं बालहा पापश्चिरं जीवितुमर्हति॥

गौतम्युवाच।

विसृजैनमबुद्धिस्त्वमवध्योऽर्जुनक त्वया।
को ह्यात्मानं गुरुं कुर्यात्प्राप्तव्यमविचिन्तयन्॥
प्लवन्ते धर्मलघवो लोकेऽम्भसि यथा प्लवाः।
मज्जन्ति पापगुरवः शस्त्रं स्कन्नमिवोदके॥
हत्वा चैनं नामृतः स्यादयं मे
जीवत्यस्मिन्कोऽत्ययः स्यादयं ते।
अस्योत्सर्गे प्राणयुक्तस्य जन्तो-
र्मृत्योर्लोकं को नु गच्छेदनन्तम्॥

लुब्धक उवाच।

जानाम्यहं देवि गुणागुणज्ञे
सर्वार्तियुक्ता गुरवो भवन्ति।
स्वस्थस्यैते तूपदेशा भवन्ति
तस्मात्क्षुद्रं सर्पमेनं हनिष्ये॥

शमार्थिनः कालगति वदन्ति
सद्यः शुचं त्वर्थविदस्त्यजन्ति ।
श्रेय.क्षय शोचति नित्यमोहा-
त्तस्माच्छुचं मुञ्च हते भुजङ्गे ॥

गौतम्युवाच ।

आर्तिर्नैव विद्यतेऽस्मद्विधानां
धर्मात्मान. सर्वदा सज्जना हि ।
नित्यायस्तो वालकोऽप्यस्य तस्मा-
दीशे नाहं पन्नगस्य प्रमाथे ॥
न ब्राह्मणानां कोपोऽस्ति कुतः कोपाच्च यातना ।
मार्दवात्क्षम्यता साधो मुच्यतामेष पन्नगः ॥

लुब्धक उवाच ।

हत्वा लाभः श्रेय एवाव्ययः स्या-
ल्लभ्यो लाभ्यः स्याद्बलिभ्यः प्रशस्तः ।
कालाल्लाभो यस्तु सत्यो भवेत
श्रेयोलाभः कुत्सितेऽस्मिन्न ते स्यात् ॥

गौतम्युवाच ।

का नु प्राप्तिर्गृह्य शत्रु निहत्य
का कामाप्ति प्राप्य शत्रु न मुक्त्वा ।
कस्मात्सौम्याह न क्षमे नो भुजङ्गे
मोक्षार्थं वा कस्य हेतोर्न कुर्याम् ॥

लुब्धक उवाच ।

अस्मादेकाद्बहवो रक्षितव्या
नैको बहुभ्यो गौतमि रक्षितव्यः ।
कृतागसं धर्मविदस्त्यजन्ति
सरीसृपं पापमिमं जहि त्वम् ॥

गौतम्युवाच ।

नास्मिन्हते पन्नगे पुत्रको मे
सम्प्राप्स्यते लुब्धक जीवितं वै ।
गुणं चान्यं नास्य वधे प्रपश्ये
तस्मात्सर्पं लुब्धक मुञ्च जीवम् ॥

लुब्धक उवाच ।

वृत्रं हत्वा देवराट् श्रेष्ठभाग्वै
यज्ञं हत्वा भागमवाप चैव ।
शूली देवो देववृत्तं चर त्वं
क्षिप्रं सर्पं जहि मा भूत्ते विशङ्का ॥

भीष्म उवाच ।

असकृत्प्रोच्यमानापि गौतमी भुजगं प्रति ।
लुब्धकेन महाभागा पापे नैवाकरोन्मतिम् ॥
ईषदुच्छ्वसमानस्तु कृच्छ्रात्संस्तभ्य पन्नग. ।
उत्ससर्ज गिरं मन्दां मानुषीं पाशपीडितः ॥

सर्प उवाच ।

को न्वर्जुनक दोषोऽत्र विद्यते मम बालिश ।
अस्वतन्त्रं हि मां मृत्युर्विवशं यदचूचुदत् ॥
तस्यायं वचनाद्दष्टो न कोपेन न काम्यया ।
तस्य तत्किल्बिषं लुब्ध विद्यते यदि किल्बिषम् ॥

लुब्धक उवाच ।

यद्यन्यवशगेनेदं कृतं ते पन्नगाशुभम् ।
कारणं वै त्वमप्यत्र तस्मात्त्वमपि किल्बिषी ॥
मृत्पात्रस्य क्रियायां हि दण्डचक्रादयो यथा ।
कारणत्वे प्रकल्प्यन्ते तथा त्वमपि पन्नग ॥

किल्विषी चापि मे वध्य किल्बिषी चासि पन्नग ।
आत्मान कारण ह्यत्र त्वमाख्यासि भुजङ्गम ।।

सर्प उवाच ।

सर्वं एते ह्यस्ववशा दण्डचक्रादयो यथा ।
तथाहमपि तस्मान्मे नैष दोषो मतस्तव ।।
अथवा मतमेतत्ते तेऽप्यन्योन्यप्रयोजका ।
कार्यकारणसदेहो भवत्यन्योन्यचोदनात् ।।
एवं सति न दोषो मे नास्मि वध्यो न किल्बिषी ।
किल्विष समवाये स्यान्मन्यसे यदि किल्बिषम् ।।

लुब्धक उवाच ।

कारण यदि न स्याद्वै न कर्ता स्यास्त्वमप्युत ।
विनाशकारण त्वं च तस्माद्वध्योऽसि मे मत ।।
असत्यपि कृते कार्ये नेह पन्नग लिप्यते ।
तस्मान्नात्रैव हेतु स्याद्वध्य. कि वहु मन्यसे ।।

सर्प उवाच ।

कार्याभावे क्रिया न स्यात्सत्यसत्यपि कारणे ।
तस्मात्समेऽस्मिन्हेतौ मे वाच्यो हेतुर्विशेषत. ।।
यद्यह कारणत्वेन मतो लुब्धक तत्त्वतः ।
अन्य· प्रयोगे स्यादत्र किल्विषी जन्तुनाशने ।।

लुब्धक उवाच ।

वध्यस्त्वं मम दुर्बुद्धे वालघाती नृशसकृत् ।
भापसे कि वहु पुनर्वध्य सन्पन्नगाधम ।।

सर्प उवाच ।

यथा हवींपि जुह्वाना मखे वै लुब्धकर्त्विज. ।
न फल प्राप्नुवन्त्यत्र फलयोगे तथा ह्यहम् ।।

भीष्म उवाच ।

तथा ब्रुवति तस्मिंस्तु पन्नगे मृत्युचोदिते ।
आजगाम ततो मृत्युः पन्नग चाब्रवीदिदम् ।।

मृत्युरुवाच ।

प्रचोदितोऽहं कालेन पन्नग त्वामचूचुदम् ।
विनाशहेतुर्नास्य त्वमहं न प्राणिनः शिशो ।।
यथा वायुर्जलधरान्विकर्षति ततस्ततः ।
तद्वज्जलदवत्सर्प कालस्याहं वशानुगः ।।
सात्त्विका राजसाश्चैव तामसा ये च केचन ।
भावाः कालात्मकाः सर्वे प्रवर्तन्ते ह जन्तुषु ।।
जङ्गमाः स्थावराश्चैव दिवि वा यदि वा भुवि ।
सर्वे कालात्मकाः सर्प कालात्मकमिदं जगत् ।।
प्रवृत्तयश्च लोकेऽस्मिंस्तथैव च निवृत्तयः ।
तासां विकृतयो याश्च सर्वं कालात्मकं स्मृतम् ।।
आदित्यश्चन्द्रमा विष्णुरापो वायुः शतक्रतुः ।
अग्निः खं पृथिवी मित्रः पर्जन्यो वसवोऽदितिः ।।
सरितः सागराश्चैव भावाभावौ च पन्नग ।
सर्वे कालेन सृज्यन्ते ह्रियन्ते च पुनः पुनः ।।
एवं ज्ञात्वा कथं मां त्वं सदोषं सर्प मन्यसे ।
अथ चैवंगते दोषे मयि त्वमपि दोषवान् ।।

सर्प उवाच ।

निर्दोषं दोषवन्तं वा न त्वा मृत्यो ब्रवीम्यहम् ।
त्वयाहं चोदित इति ब्रवीम्येतावदेव तु ।।
यदि काले तु दोषोऽस्ति यदि तत्रापि नेष्यते ।
दोषो नैव परीक्ष्यो मे न ह्यत्राधिकृता वयम् ।।
निर्मोक्षस्त्वस्य दोषस्य मया कार्यो यथा तथा ।
मृत्योरपि न दोषः स्यादिति मेऽत्र प्रयोजनम् ।।

भीष्म उवाच ।

सर्पोऽथार्जुनक प्राह श्रुतं ते मृत्युभाषितम् ।
नानागस मा पाशेन सन्तापयितुमर्हसि ।।

लुब्धक उवाच ।

मृत्यो. श्रुत मे वचन तव चैव भुजगम ।
नैव तावददोषत्व भवति त्वयि पन्नग ।।
मृत्युस्त्व चैव हेतुर्हि बालस्यास्य विनाशने ।
उभय कारणं मन्ये न कारणमकारणम् ।।
धिङमृत्यु च दुरात्मानं क्रूर दु.खकरं सताम् ।
त्वां चैवाहं वधिष्यामि पापं पापस्य कारणम् ।।

मृत्युरुवाच ।

विवशौ कालवशगावावा निर्दिष्टकारिणौ ।
नावा दोषेण गन्तव्यौ यदि सम्यक्प्रपश्यसि ।।

लुब्धक उवाच ।

युवामुभौ कालवशौ यदि मे मृत्युपन्नगौ ।
हर्षक्रोधौ यथा स्यातामेतदिच्छामि वेदितुम् ।।

मृत्युरुवाच ।

या काचिदेव चेष्टा स्यात्सर्वा कालप्रचोदिता ।
पूर्वमेवैतदुक्तं हि मया लुब्धक कालत. ।।
तस्मादुभौ कालवशावावा निर्दिष्टकारिणौ ।
नावां दोषेण गन्तव्यौ त्वया लुब्धक कर्हिचित् ।।

भीष्म उवाच ।

अथोपगम्य कालस्तु तस्मिन्धर्मार्थसंशये ।
अब्रवीत्पन्नगं मृत्यु लुब्धं चार्जुनक तथा ।।

काल उवाच।

न ह्यहं नाप्ययं मृत्युर्नायं लुब्धक पन्नगः।
किल्बिषी जन्तुमरणे न वयं हि प्रयोजकाः॥
अकरोद्यदयं कर्म तन्नोऽर्जुनक चोदकम्।
विनाशहेतुर्नान्योऽस्य वध्यतेऽयं स्वकर्मणा॥
यदनेन कृतं कर्म तेनायं निधनं गतः।
विनाशहेतुः कर्मास्य सर्वे कर्मवशा वयम्॥
कर्मदायादवाँल्लोकः कर्मसंबन्धलक्षणः।
कर्माणि चोदयन्तीह यथान्योन्यं तथा वयम्॥
यथा मृत्पिण्डतः कर्ता कुरुते यद्यदिच्छति।
एवमात्मकृतं कर्म मानवः प्रतिपद्यते॥
यथा च्छायातपौ नित्यं सुसंबद्धौ निरन्तरम्।
तथा कर्म च कर्ता च संबद्धावात्मकर्मभिः॥
एवं नाहं न वै मृत्युर्न सर्पो न तथा भवान्।
न चेयं ब्राह्मणी वृद्धा शिशुरेवात्र कारणम्॥

भीष्म उवाच।

तस्मिंस्तथा ब्रुवाणे तु ब्राह्मणी गौतमी नृप।
स्वकर्मप्रत्ययाँल्लोकान्मत्वार्जुनकमब्रवीत्॥

गौतम्युवाच।

नैव कालो न भुजगो न मृत्युरिह कारणम्।
स्वकर्मभिरयं बालः कालेन निधनं गतः॥
मया च तत्कृतं कर्म येनायं मे मृतः सुतः।
यातु कालस्तथा मृत्युर्मुञ्चार्जुनक पन्नगम्॥

भीष्म उवाच।

ततो यथागतं जग्मुर्मृत्युः कालोऽथ पन्नगः।
अभूद्विशोकोऽर्जुनको विशोका चैव गौतमी॥

एतच्छ्रुत्वा शम गच्छ मा भूः शोकपरो नृप।
स्वकर्मप्रत्ययाँल्लोकान्सर्वे गच्छन्ति वै नृप॥
नैव त्वया कृतं कर्म नापि दुर्योधनेन वै।
कालेनैतत्कृत विद्धि निहता येन पार्थिवा.॥

# महाप्रस्थानम्

(म० १७।१।२०-३३, २।१-२६, ३।१-२२)

वैशपायन उवाच।

तत स राजा कौरव्यो धर्मपुत्रो युधिष्ठिर.।
उत्सृज्याभरणान्यङ्गाज्जगृहे वल्कलान्युत ।।
भीमार्जुनयमाश्चैव द्रौपदी च यशस्विनी।
तथैव जगृहु· सर्वे वल्कलानि नराधिप।
विधिवत्कारयित्वेष्टि नैष्ठिकी भरतर्षभ ।।
समुत्सृज्याप्सु सर्वेऽग्नीन्प्रतस्थुर्नरपुगवा ।
तत. प्ररुरुदु सर्वा. स्त्रियो दृष्ट्वा नरोत्तमान् ।।
प्रस्थितान्द्रौपदीषष्ठान्पुरा द्यूतजितान्यथा।
हर्षोऽभवच्च सर्वेषा भ्रातृणा गमन प्रति ।।
युधिष्ठिरमत ज्ञात्वा वृष्णिक्षयमवेक्ष्य च।
भ्रातर. पञ्च कृष्णा च षष्ठी श्वा चैव सप्तम ।।
आत्मना सप्तमो राजा निर्ययौ गजसाह्वयात्।
पौरैरनुगतो दूर सर्वैरन्त.पुरैस्तथा ।।
न चैनमशकत्कश्चिन्निवर्तस्वेति भाषितुम्।
न्यवर्तन्त तत· सर्वे नरा नगरवासिन ।।
पाण्डवाश्च महात्मानो द्रौपदी च यशस्विनी।
कृतोपवासा. कौरव्य प्रययु प्राङ्मुखास्तत ।।
योगयुक्ता महात्मानस्त्यागधर्ममुपेयुष ।
अभिजग्मुर्बहून्देशान्सरित सागरास्तथा ।।
युधिष्ठिरो ययावग्रे भीमस्तु तदनन्तरम्।
अर्जुनस्तस्य चान्वेव यमौ चापि यथाक्रमम् ।।
पृष्ठतस्तु वरारोहा श्यामा पद्मदलेक्षणा।
द्रौपदी योषिता श्रेष्ठा यमौ भरतसत्तम ।।
श्वा चैवानुययावेक. प्रस्थितान्पाण्डवान्वनम्।

क्रमेण ते ययुर्वीरा लौहित्य सलिलार्णवम् ।।
ततस्ते नियतात्मान उदीची दिशमास्थिताः ।
ददृशुर्योगयुक्ताश्च हिमवन्त महागिरिम् ।।
त चाप्यतिक्रमन्तस्ते ददृशुर्वालुकार्णवम् ।
अवैक्षन्त महाशैलं मेरु शिखरिणा वरम् ।।
तेपा तु गच्छता शीघ्र सर्वेषा योगधर्मिणाम् ।
याज्ञसेनी भ्रष्टयोगा निपपात महीतले ।।
ता तु प्रपतितां दृष्ट्वा भीमसेनो महाबलः ।
उवाच धर्मराजानं याज्ञसेनीमवेक्ष्य ह ।।
नाधर्मञ्चरितः कश्चिद्राजपुत्र्या परतप ।
कारण किं नु तद्ब्रूहि यत्कृष्णा पतिता भुवि ।।

युधिष्ठिर उवाच ।

पक्षपातो महानस्या विशेषेण धनंजये ।
तस्यैतत्फलमद्यैषा भुङ्क्ते पुरुषसत्तम ।।

वैशपायन उवाच ।

एवमुक्त्वानवैक्ष्यैना ययौ भरतसत्तमः ।
समाधाय मनो धीमान्धर्मात्मा पुरुपर्षभः ।।
सहदेवस्ततो विद्वान्निपपात महीतले ।
तं चापि पतित दृष्ट्वा भीमो राजानमब्रवीत् ।।
योऽयमस्मासु सर्वेषु शुश्रूपुरनहङ्कृत. ।
सोऽयं माद्रवतीपुत्र कस्मान्निपतितो भुवि ।।

युधिष्ठिर उवाच ।

आत्मनः सदृश प्राज्ञ नैपोऽमन्यत कंचन ।
तेन दोषेण पतितस्तस्मादेष नृपात्मजः ।।

वैशंपायन उवाच ।

इत्युक्त्वा त समुत्सृज्य सहदेवं ययौ तदा ।
भ्रातृभि सह कौन्तेय शुना चैव युधिष्ठिरः ।।

कृष्णा निपतिता दृष्ट्वा सहदेवं च पाण्डवम् ।
आर्तो बन्धुप्रियः शूरो नकुलो निपपात ह ।।
तस्मिन्निपतिते वीरे नकुले चारुदर्शने ।
पुनरेव तदा भीमो राजानमिदमब्रवीत् ।।
योऽयमक्षतधर्मात्मा भ्राता वचनकारकः ।
रूपेणाप्रतिमो लोके नकुल. पतितो भुवि ।।
इत्युक्तो भीमसेनेन प्रत्युवाच युधिष्ठिरः ।
नकुलं प्रति धर्मात्मा सर्वबुद्धिमता वर ।।
रूपेण मत्समो नास्ति कश्चिदित्यस्य दर्शनम् ।
अधिकश्चाहमेवैक इत्यस्य मनसि स्थितम् ।।
नकुल पतितस्तस्मादागच्छ त्वं वृकोदर ।
यस्य यद्विहितं वीर सोऽवश्यं तदुपाश्नुते ।।
तास्तु प्रपतितान्दृष्ट्वा पाण्डव श्वेतवाहन. ।
पपात शोकसतप्तस्ततो नु परवीरहा ।।
तस्मिस्तु पुरुषव्याघ्रे पतिते शक्रतेजसि ।
म्रियमाणे दुराधर्षे भीमो राजानमब्रवीत् ।।
अनृत न स्मराम्यस्य स्वैरेष्वपि महात्मन ।
अथ कस्य विकारोऽय येनाय पतितो भुवि ।।

युधिष्ठिर उवाच ।

एकाह्ना निर्दहेयं वै शत्रूनित्यर्जुनोऽब्रवीत् ।
न च तत्कृतवानेष शूरमानी ततोऽपतत् ।।
अवमेने धनुर्ग्राहानेष सर्वांश्च फल्गुन. ।
तथा चैतन्न तु तथा कर्तव्य भूतिमिच्छता ।।

वैशपायन उवाच ।

इत्युक्त्वा प्रस्थितो राजा भीमोऽथ निपपात ह ।
पतितश्चाब्रवीद्भीमो धर्मराज युधिष्ठिरम् ।।
भो भो राजन्नवेक्षस्व पतितोऽह प्रियस्तव ।
किं निमित्त च पतन ब्रूहि मे यदि वेत्थ ह ।।

युधिष्ठिर उवाच ।

अतिभुक्तं च भवता प्राणेन च विकत्थसे ।
अनवेक्ष्य परं पार्थ तेनासि पतितः क्षितौ ।।

वैशंपायन उवाच ।

इत्युक्त्वा तं महाबाहुर्जगामानवलोकयन् ।
श्वाप्येकोऽनुययौ यस्ते बहुशः कीर्तितो मया ।।
ततः संनादयञ्शक्रो दिवं भूमिं च सर्वशः ।
रथेनोपययौ पार्थमारोहेत्यब्रवीच्च तम् ।।
स्वभ्रातॄन्पतितान्दृष्ट्वा धर्मराजो युधिष्ठिरः ।
अब्रवीच्छोकसंतप्तः सहस्राक्षमिदं वचः ।।
भ्रातरः पतिता मेऽत्र गच्छेयुस्ते मया सह ।
न विना भ्रातृभिः स्वर्गमिच्छे गन्तुं सुरेश्वर ।।
सुकुमारी सुखार्हा च राजपुत्री पुरंदर ।
सास्माभिः सह गच्छेत तद्भवाननुमन्यताम् ।।

शक्र उवाच ।

भ्रातॄन्द्रक्ष्यसि स्वर्गे त्वमग्रतस्त्रिदिवं गतान् ।
कृष्णया सहितान्सर्वान्मा शुचो भरतर्षभ ।।
निक्षिप्य मानुषं देहं गतास्ते भरतर्षभ ।
अनेन त्वं शरीरेण स्वर्गं गन्ता न संशयः ।।

युधिष्ठिर उवाच ।

अयं श्वा भूतभव्येश भक्तो मां नित्यमेव ह ।
स गच्छेत मया सार्धमानृशंस्या हि मे मतिः ।।

शक्र उवाच ।

अमर्त्यत्वं मत्समत्वं च राज-
ञ्श्रियं कृत्स्नां महतीं चैव सिद्धिम् ।
संप्राप्तोऽद्य स्वर्गसुखानि च त्वं
त्यज श्वानं नात्र नृशंसमस्ति ।।

युधिष्ठिर उवाच।

अनार्यमार्येण सहस्रनेत्र
शक्य कर्तुं दुष्करमेतदार्यं।
मा मे श्रिया संगमन तयास्तु
यस्याः कृते भक्तजनं त्यजेयम् ॥

इन्द्र उवाच।

स्वर्गे लोके श्ववता नास्ति धिष्ण्य-
मिष्टापूर्तं क्रोधवशा हरन्ति।
ततो विचार्य क्रियतां धर्मराज
त्यज श्वानं नात्र नृशसमस्ति ॥

युधिष्ठिर उवाच।

भक्तत्यागं प्राहुरत्यन्तपापं
तुल्य लोके ब्रह्मवध्याकृतेन।
तस्मान्नाहं जातु कथचनाद्य
त्यक्ष्याम्येनं स्वसुखार्थी महेन्द्र ॥
भीत भक्त नान्यदस्तीति चार्तं
प्राप्तं श्वान रक्षणे प्राणलिप्सुम्।
प्राणत्यागादप्यहं नैव मोक्तु
यतेयं वै नित्यमेतद्व्रतं मे ॥

इन्द्र उवाच।

शुना दृष्ट क्रोधवशा हरन्ति
यद्दत्तमिष्टं विवृतमथो हुत च।
तस्माच्छुनस्त्यागमिमं कुरुष्व
शुनस्त्यागात्प्राप्स्यसे देवलोकम् ॥
त्यक्त्वा भ्रातॄन्दयिता चापि कृष्णा
प्राप्तो लोक· कर्मणा स्वेन वीर।
श्वान चैनं न त्यजसे कथ नु
त्याग कृत्स्न चास्थितो मुह्यसेऽद्य ॥

युधिष्ठिर उवाच।

न विद्यते संधिरथापि विग्रहो
मृतैर्मर्त्यैरिति लोकेषु निष्ठा।
न ते मया जीवयितुं हि शक्या-
स्ततस्त्यागस्तेषु कृतो न जीवताम्॥
भीतिप्रदानं शरणागतस्य
स्त्रिया वधो ब्राह्मणस्वापहारः।
मित्रद्रोहस्तानि चत्वारि शक्र
भक्तत्यागश्चैव समो मतो मे॥

वैशंपायन उवाच।

तद्धर्मराजस्य वचो निशम्य
धर्मस्वरूपी भगवानुवाच।
युधिष्ठिरं प्रीतियुक्तो नरेन्द्रं
श्लक्ष्णैर्वाक्यैः संस्तवसंप्रयुक्तैः॥

धर्मराज उवाच।

अभिजातोऽसि राजेन्द्र पितुर्वृत्तेन मेधया।
अनुक्रोशेन चानेन सर्वभूतेषु भारत॥
पुरा द्वैतवने चासि मया पुत्र परीक्षितः।
पानीयार्थे पराक्रान्ता यत्र ते भ्रातरो हताः॥
भीमार्जुनौ परित्यज्य यत्र त्वं भ्रातरावुभौ।
मात्रोः साम्यमभीप्सन्वै नकुलं जीवमिच्छसि॥
अयं श्वा भक्त इत्येवं त्यक्तो देवरथस्त्वया।
तस्मात्स्वर्गे न ते तुल्यः कश्चिदस्ति नराधिप॥
अतस्तवाक्षया लोकाः स्वशरीरेण भारत।
प्राप्तोऽसि भरतश्रेष्ठ दिव्यां गतिमनुत्तमाम्॥

# रामनिर्वासनम्

(रा० २।१८-१९)

स ददर्शासने रामो विषण्ण पितर शुभे ।
कैकेय्या सहितं दीन मुखेन परिशुष्यता ।।
स पितुश्चरणौ पूर्वमभिवाद्य विनीतवत् ।
ततो ववन्दे चरणौ कैकेय्या सुसमाहित ।।
रामेत्युक्त्वा तु वचन बाष्पपर्याकुलेक्षण ।
शशाक नृपतिर्दीनो नेक्षितु नाभिभाषितुम् ।।
तदपूर्वं नरपतेर्दृष्ट्वा रूप भयावहम् ।
रामोऽपि भयमापन्नः पदा स्पृष्ट्वेव पन्नगम् ।।
इन्द्रियैरप्रहृष्टैस्त शोकसतापकर्शितम् ।
नि श्वसन्त महाराज व्यथिताकुलचेतसम् ।।
ऊर्मिमालिनमक्षोभ्य क्षुभ्यन्तमिव सागरम् ।
उपप्लुतमिवादित्यमुक्तानृतमृषि यथा ।।
अचिन्त्यकल्पं नृपतेस्त शोकमुपधारयन् ।
बभूव सरब्धतरः समुद्र इव पर्वणि ।।
चिन्तयामास चतुरो राम पितृहिते रत. ।
किं स्विदद्यैव नृपतिर्न मा प्रत्यभिनन्दति ।।
अन्यदा मा पिता दृष्ट्वा कुपितोऽपि प्रसीदति ।
तस्य मामद्य सप्रेक्ष्य किमायास. प्रवर्तते ।।
स दीन इव शोकार्तो विषण्णवदनद्युति ।
कैकेयीमभिवाद्यैव-रामो वचनमब्रवीत् ।।
कच्चिन्मया नापराद्धमज्ञानाद्येन मे पिता ।
कुपितस्तन्ममाचक्ष्व त्वमेवैन प्रसादय ।।
अप्रसन्नमना· किं नु सदा मा प्रति वत्सल· ।
विषण्णवदनो दीनः सदा मा प्रति भाषते ।।

शारीरो मानसो वापि कच्चिदेनं न बाधते ।
संतापो वाभितापो वा दुर्लभं हि सदा सुखम् ।।
कच्चिन्न किंचिद्भरते कुमारे प्रियदर्शने ।
शत्रुघ्ने वा महासत्त्वे मातॄणा वा ममाशुभम् ।।
अतोषयन्महाराजमकुर्वन्वा पितुर्वचः ।
मुहूर्तमपि नेच्छेयं जीवितु कुपिते नृपे ।।
यतोमूल नरः पश्येत्प्रादुर्भावमिहात्मन. ।
कथं तस्मिन्न वर्तेत प्रत्यक्षे सति दैवते ।।
कच्चित्ते परुपं किंचिदभिमानात्पिता मम ।
उक्तो भवत्या रोषेण येनास्य लुलितं मनः ।।
एतदाचक्ष्व मे देवि तत्त्वेन परिपृच्छतः ।
किंनिमित्तमपूर्वोऽयं विकारो मनुजाधिपे ।।
एवमुक्ता तु कैकेयी राघेवण महात्मना ।
उवाचेदं सुनिर्लज्जा धृष्टमात्महित वचः ।।
न राजा कुपितो राम व्यसनं नास्य किचन ।
किंचिन्मनोगत त्वस्य त्वद्भयान्नानुभाषते ।।
प्रियं त्वामप्रियं वक्तु वाणी नास्य प्रवर्तते ।
तदवश्यं त्वया कार्य यदनेनाश्रुत मम ।।
एप मह्यं वरं दत्त्वा पुरा मामभिपूज्य च ।
स पश्चात्तप्यते राजा यथान्यः प्राकृतस्तथा ।।
अतिसृज्य ददानीति वरं मम विशां पतिः ।
स निरर्थं गतजले सेतु वन्धितुमिच्छति ।।
धर्ममूलमिद राम विदितं च सतामपि ।
तत्सत्यं न त्यजेद्राजा कुपितस्त्वत्कृते यथा ।।
यदि तद्वक्ष्यते राजा शुभं वा यदि वाशुभम् ।
करिष्यसि ततः सर्वमाख्यास्यामि पुनस्त्वहम् ।।
यदि त्वभिहितं राज्ञा त्वयि तन्न विपत्स्यते ।
ततोऽहमभिधास्यामि न ह्येप त्वयि वक्ष्यति ।।
एतत्तु वचनं श्रुत्वा कैकेय्या समुदाहृतम् ।
उवाच व्यथितो रामस्ता देवी नृपसंनिधौ ।।

अहो धिङ्नार्हसे देवि वक्तु मामीदृश वच: ।
अह हि वचनाद्राज्ञ: पतेयमपि पावके ।।
भक्षयेय विष तीक्ष्ण पतेयमपि चार्णवे ।
नियुक्तो गुरुणा पित्रा नृपेण च हितेन च ।।
तद्ब्रूहि वचन देवि राज्ञो यदभिकाङ्क्षितम् ।
करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते ।।
तमार्जवसमायुक्तमनार्या सत्यवादिनम् ।
उवाच रामं कैकेयी वचन भृशदारुणम् ।।
पुरा देवासुरे युद्धे पित्रा ते मम राघव ।
रक्षितेन वरौ दत्तौ सशल्येन महारणे ।।
तत्र मे याचितो राजा भरतस्याभिषेचनम् ।
गमनं दण्डकारण्ये तव चाद्यैव राघव ।।
यदि सत्यप्रतिज्ञ त्व पितर कर्तुमिच्छसि ।
आत्मान च नरश्रेष्ठ मम वाक्यमिद श्रृणु ।।
सनिदेशे पितुस्तिष्ठ यथानेन प्रतिश्रुतम् ।
त्वयारण्य प्रवेष्टव्य नव वर्षाणि पञ्च च ।
भरतश्चाभिषिच्येत यदेतदभिषेचनम् ।
त्वदर्थे विहित राज्ञा तेन सर्वेण राघव ।।
सप्त सप्त च वर्षाणि दण्डकारण्यमाश्रित. ।
अभिषेकमिदं त्यक्त्वा जटाचीरधरो भव ।।
भरत: कोसलपते: प्रशास्तु वसुधामिमाम् ।
नानारत्नसमाकीर्णां सवाजिरथसकुलाम् ।।
एतेन त्वा नरेन्द्रोऽय कारुण्येन समाप्लुत. ।
शोकै सक्लिष्टवदनो न शक्नोति निरीक्षितुम् ।।
एतत्कुरु नरेन्द्रस्य वचन रघुनन्दन ।
सत्येन महता राम तारयस्व नरेश्वरम् ।।
इतीव तस्या परुषं वदन्त्यां
न चैव राम: प्रविवेश शोकम् ।
प्रविव्यथे चापि महानुभावो
राजा च पुत्रव्यसनाभितप्त. ।।

तदप्रियममित्रघ्नो वचन मरणोपमम् ।
श्रुत्वा न विव्यथे रामः कैकेयी चेदमब्रवीत् ।।
एवमस्तु गमिप्यामि वनं वस्तुमह त्वितः ।।
जटाचीरधरो राज्ञः प्रतिज्ञामनुपालयन् ।।
इद तु ज्ञातुमिच्छामि किमर्थ मा महीपतिः ।।
नाभिनन्दति दुर्धर्षो यथापूर्वमरिदमः ।।
मन्युर्न च त्वया कार्यो देवि ब्रूमि तवाग्रत॰ ।
यास्यामि भव सुप्रीता वनं चीरजटाधर॰ ।।
हितेन गुरुणा पित्रा कृतज्ञेन नृपेण च ।
नियुज्यमानो विस्रब्धः किं न कुर्यामहं प्रियम् ।।
अलीक मानस त्वेक हृदय दहते मम ।
स्वयं यन्नाह मा राजा भरतस्याभिपेचनम् ।।
अह हि सीता राज्यं च प्राणानिष्टान्धनानि च ।
हृष्टो भ्रात्रे स्वय दद्या भरतायाप्रचोदितः ।।
कि पुनर्मनुजेन्द्रेण स्वयं पित्रा प्रचोदित. ।
तव च प्रियकामार्थं प्रतिज्ञामनुपालयन् ।।
तथाश्वासय ह्रीमन्त कि त्विद यन्महीपतिः ।
वसुधासक्तनयनो मन्दमश्रूणि मुञ्चति ।।
गच्छन्तु चैवानयितु दूताः शीघ्रजवैर्हयैः ।
भरत मातुलकुलादद्यैव नृपशासनात् ।।
दण्डकारण्यमेषोऽह गच्छाम्येव हि सत्वरः ।
अविचार्य पितुर्वाक्यं समा वस्तु चतुर्दश ।।
सा हृष्टा तस्य तद्वाक्य श्रुत्वा रामस्य केकयी ।
प्रस्थान श्रद्दधाना सा त्वरयामास राघवम् ।।
एव भवतु यास्यन्ति दूता. शीघ्रजवैर्हयैः ।
भरत मातुलकुलादिहावर्तयितु नराः ।।
तव त्वह क्षम मन्ये नोत्सुकस्य विलम्बनम् ।
राम तस्मादितः शीघ्र वन त्वं गन्तुमर्हसि ।।
व्रीडान्वितः स्वय यच्च नृपस्त्वा नाभिभापते ।
नैतत्किंचिन्नरश्रेष्ठ मन्युरेषोऽपनीयताम् ।।

यावत्त्व न वनं यातः पुरादस्मादतित्वरन् ।
पिता तावन्न ते राम स्नास्यते भोक्ष्यतेऽपि वा ।।
धिक्कष्टमिति निःश्वस्य राजा शोकपरिप्लुतः ।
मूर्छितो न्यपतत्तस्मिन्पर्यङ्के हेमभूषिते ।।
रामोऽप्युत्थाप्य राजान कैकेय्याभिप्रचोदित. ।
कशयेव हतो वाजी वन गन्तु कृतत्वर ।।
तदप्रियमनार्याया वचन दारुणोदयम् ।
श्रुत्वा गतव्यथो राम· कैकेयी वाक्यमब्रवीत् ।।
नाहमर्थपरो देवि लोकमावस्तुमुत्सहे ।
विद्धि मामृषिभिस्तुल्य विमल धर्ममास्थितम् ।।
यत्तत्रभवत. किंचिच्छक्य कर्तुं प्रिय मया ।
प्राणानपि परित्यज्य सर्वथा कृतमेव तत् ।।
न ह्यतो धर्मचरणं किंचिदस्ति महत्तरम् ।
यथा पितरि शुश्रूषा तस्य वा वचनक्रिया ।।
अनुक्तोऽप्यत्रभवता भवत्या वचनादहम् ।
वने वत्स्यामि विजने वर्षाणीह चतुर्दश ।।
न नून मयि कैकेयि किंचिदाशससे गुणान् ।
यद्राजानमवोचस्त्वं ममेश्वरतरा सती ।।
यावन्मातरमापृच्छे सीता चानुनयाम्यहम् ।
ततोऽद्यैव गमिष्यामि दण्डकाना महद्वनम् ।।
भरत· पालयेद्राज्यं शुश्रूषेच्च पितुर्यथा ।
तथा भवत्या कर्तव्यं स हि धर्मः सनातन ।।
रामस्य तु वच. श्रुत्वा भृश दु.खगत. पिता ।
शोकादशक्नुवन्वक्तु प्ररुरोद महास्वनम् ।।

## रामानुगमने सीतायाः संकल्पः

(रा० २।२७)

एवमुक्ता तु वैदेही प्रियार्हा प्रियवादिनी।
प्रणयादेव संक्रुद्धा भर्तारमिदमब्रवीत्॥
किमिदं भाषसे राम वाक्य लघुतया ध्रुवम्।
त्वया यदपहास्य मे श्रुत्वा नरवरोत्तम॥
वीराणा राजपुत्राणां शस्त्रास्त्रविदुषां नृप।
अनर्हमयशस्यं च न श्रोतव्यं त्वयेरितम्॥
आर्यपुत्र पिता माता भ्राता पुत्रस्तथा स्नुषा।
स्वानि पुण्यानि भुञ्जाना. स्व स्व भाग्यमुपासते॥
भर्तुर्भाग्यं तु नार्येका प्राप्नोति पुरुषर्षभ।
अतश्चैवाहमादिष्टा वने वस्तव्यमित्यपि॥
न पिता नात्मजो वात्मा न माता न सखीजनः।
इह प्रेत्य च नारीणा पतिरेको गतिः सदा॥
यदि त्वं प्रस्थितो दुर्ग वनमद्यैव राघव।
अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान्॥
ईर्ष्या रोषं वहिष्कृत्य भुक्तशेषमिवोदकम्।
नय मां वीर विस्रब्धः पापं मयि न विद्यते॥
प्रासादाग्रे विमानैर्वा वैहायसगतेन वा।
सर्वावस्थागता भर्तुः पादच्छाया विशिष्यते॥
अनुशिष्टास्मि मात्रा च पित्रा च विविधाश्रयम्।
नास्मि संप्रति वक्तव्या वर्तितव्य यथा मया॥
अहं दुर्गं गमिष्यामि वन पुरुषवर्जितम्।
नानामृगगणाकीर्णं शार्दूलगणसेवितम्॥
सुखं वने निवत्स्यामि यथैव भवने पितुः।
अचिन्तयन्ती त्रीँल्लोकांश्चिन्तयन्ती पतिव्रतम्॥
शुश्रूषमाणा ते नित्यं नियता ब्रह्मचारिणी।

सह रंस्ये त्वया वीर वनेषु मधुगन्धिषु ।।
त्व हि कर्तुं वने शक्तो राम संपरिपालनम् ।
अन्यस्यापि जनस्येह किं पुनर्मम मानद ।।
साह त्वया गमिष्यामि वनमद्य न सशय. ।
नाह शक्या महाभाग निवर्तयितुमुद्यता ।।
फलमूलाशना नित्य भविष्यामि न सशय ।
न ते दु ख करिष्यामि निवसन्ती त्वया सदा ।।
अग्रतस्ते गमिष्यामि भोक्ष्ये भुक्तवति त्वयि ।
इच्छामि परत. शैलान्पल्वलानि सरासि च ।।
द्रष्टु सर्वत्र निर्भीता त्वया नाथेन धीमता ।
हसकारण्डवाकीर्णाः पद्मिनी. साधुपुष्पिता. ।।
इच्छेय सुखिनी द्रष्टु त्वया वीरेण सगता ।
अभिषेक करिष्यामि तासु नित्यमनुव्रता ।।
सह त्वया विशालाक्ष रंस्ये परमनन्दिनी ।
एव वर्षसहस्राणि शत वापि त्वया सह ।।
व्यतिक्रम न वेत्स्यामि स्वर्गोऽपि हि न मे मत· ।
स्वर्गेऽपि च विना वासो भविता यदि राघव ।।
त्वया मम नरव्याघ्र नाह तदपि रोचये ।।
अह गमिष्यामि वन सुदुर्गमं
मृगायुत वानरवारणैश्च ।
वने निवत्स्यामि यथा पितुर्गृहे
तवैव पादावुपगृह्य संमता ।।
अनन्यभावामनुरक्तचेतस
त्वया वियुक्ता मरणाय निश्चिताम् ।
नयस्व मा साधु कुरुष्व याचना
नातो मया ते गुरुता भविष्यति ।।
तथा ब्रुवाणामपि धर्मवत्सला
न च स्म सीता नृवरो निनीषति ।
उवाच चैना बहु सनिवर्तने
वने निवासस्य च दु खिता प्रति ।।

# वनवासदुःखम्

(रा० २।२८।१-२५)

स एवं ब्रुवती सीता धर्मज्ञा धर्मवत्सलः ।
न नेतु कुरुते बुद्धि वने दु·खानि चिन्तयन् ।।
सान्त्वयित्वा ततस्ता तु बाष्पदूषितलोचनाम् ।
निवर्तनार्थे धर्मात्मा वाक्यमेतदुवाच ह ।।
सीते महाकुलीनासि धर्मे च निरता सदा ।
इहाचरस्व धर्मं त्व यथा मे मनस. सुखम् ।।
सीते यथा त्वा वक्ष्यामि तथा कार्यं त्वयाबले ।
वने दोषा हि बहवो वसतस्तान्निबोध मे ।।
सीते विमुच्यतामेषा वनवासकृता मति· ।
बहुदोषं हि कान्तारं वनमित्यभिधीयते ।।
हितबुद्धया खलु वचो मयैतदभिधीयते ।
सदा सुखं न जानामि दु.खमेव सदा वनम् ।।
गिरिनिर्झरसंभूता गिरिकन्दरवासिनाम् ।
सिहानां निनदा दु·खा श्रोतु दु.खमतो वनम् ।।
क्रीडमानाश्च विस्रब्धा मत्ताः शून्ये तथा मृगाः ।
दृष्ट्वा समभिवर्तन्ते सीते दु खमतो वनम् ।।
सग्राहा. सरितश्चैव पङ्कवत्यस्तु दुस्तराः ।
मत्तैरपि गजैर्नित्यमतो दुःखतर वनम् ।।
लताकण्टकसकीर्णाः कृकवाकूपनादिताः ।
निरपाश्च सुदु.खाश्च मार्गा दु.खमतो वनम् ।।
सुप्यते पर्णशय्यासु स्वयभग्नासु भूतले ।
रात्रिषु श्रमखिन्नेन तस्माद्दु.खमतो वनम् ।।
अहोरात्र च संतोष कर्तव्यो नियतात्मना ।
फलैर्वृक्षावपतितै. सीते दुःखमतो वनम् ।।
उपवासश्च कर्तव्यो यथाप्राणेन मैथिलि ।

जटाभारश्च कर्तव्यो वल्कलाम्बरधारणम् ।।
देवताना पितॄणां च कर्तव्य विधिपूर्वकम् ।
प्राप्तानामतिथीना च नित्यश. प्रतिपूजनम् ।।
कार्यस्त्रिरभिषेकश्च काले काले च नित्यश. ।
चरता नियमेनैव तस्माद्दु खतर वनम् ।।
उपहारश्च कर्तव्यः कुसुमै. स्वयमाहृतै ।
आर्षेण विधिना वेद्या सीते दुःखमतो वनम् ।।
यथालब्धेन कर्तव्य. संतोषस्तेन मैथिलि ।
यथाहारैर्वनचरैः सीते दु खमतो वनम् ।।
अतीव वातास्तिमिर बुभुक्षा चास्ति नित्यशः ।
भयानि च महान्त्यत्र अतो दु खतर वनम् ।।
सरीसृपाश्च बहवो बहुरूपाश्च भामिनि ।
चरन्ति पथि ते दर्पात्ततो दु खतर वनम् ।।
नदीनिलयनाः सर्पा नदीकुटिलगामिनः ।
तिष्ठन्त्यावृत्य पन्थानमतो दु खतर वनम् ।।
पतङ्गा वृश्चिका. कीटा दशाश्च मशकैः सह ।
बाधन्ते नित्यमबले सर्वं दु खमतो वनम् ।।
द्रुमाः कण्टकिनश्चैव कुशा काशाश्च भामिनि ।
वने व्याकुलशाखाग्रास्तेन दुःखमतो वनम् ।।
कायक्लेशाश्च बहवो भयानि विविधानि च ।
अरण्यवासे वसतो दु खमेव सदा वनम् ।।
क्रोधलोभौ विमोक्तव्यौ कर्तव्या तपसे मति· ।
न भेतव्य च भेतव्ये दु खं नित्यमतो वनम् ।।
तदल ते वन गत्वा क्षेम न हि वनं तव ।
विमृशन्निव पश्यामि बहुदोषकरं वनम् ।।

## भरतप्रार्थना

(रा० २।१११२।९-३१)

त्रस्तगात्रस्तु भरत. स वाचा सज्जमानया ।
कृताञ्जलिरिद वाक्यं राघवं पुनरब्रवीत् ।।
राम धर्ममिमं प्रेक्ष्य कुलधर्मानुसततम् ।
कर्तुमर्हसि काकुत्स्थ मम मातुश्च याचनाम् ।।
रक्षितु सुमहद्राज्यमहमेकस्तु नोत्सहे ।
पौरजानपदाश्चापि रक्तान्रञ्जयितु तदा ।।
ज्ञातयश्चापि योधाश्च मित्राणि सुहृदश्च नः ।
त्वामेव हि प्रतीक्षन्ते पर्जन्यमिव कर्षकाः ।।
इदं राज्यं महाप्राज्ञ स्थापय प्रतिपद्य हि ।
शक्तिमान्स हि काकुत्स्थ लोकस्य परिपालने ।।
एवमुक्त्वापतद्भ्रातुः पादयोर्भरतस्तदा ।
भृशं संप्रार्थयामास राघवेऽतिप्रियं वदन् ।।
तमङ्के भ्रातरं कृत्वा रामो वचनमब्रवीत् ।
श्यामं नलिनपत्राक्षं मत्तहंसस्वरः स्वयम् ।।
आगता त्वामियं बुद्धिः स्वजा वैनयिकी च या ।
भृशमुत्सहसे तात रक्षितु पृथिवीमपि ।।
अमात्यैश्च सुहृद्भिश्च बुद्धिमद्भिश्च मन्त्रिभिः ।
सर्वकार्याणि समन्त्र्य महान्त्यपि हि कारय ।।
लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान्वा हिम त्यजेत् ।
अतीयात्सागरो वेलां न प्रतिज्ञामहं पितुः ।।
कामाद्वा तात लोभाद्वा मात्रा तुभ्यमिद कृतम् ।
न तन्मनसि कर्तव्यं वर्तितव्यं च मातृवत् ।।
एवं ब्रुवाण भरत. कौसल्यासुतमब्रवीत् ।
तेजसादित्यसकाशं प्रतिपच्चन्द्रदर्शनम् ।।

अधिरोहार्य पादाभ्या पादुके हेमभूषिते ।
एते हि सर्वलोकस्य योगक्षेम विधास्यत ॥
सोऽधिरुह्य नरव्याघ्र पादुके व्यवमुच्य च ।
प्रायच्छत्सुमहातेजा भरताय महात्मने ॥
स पादुके सप्रणम्य रामं वचनमब्रवीत् ।
चतुर्दश हि वर्षाणि जटाचीरधरो ह्यहम् ॥
फलमूलाशनो वीर भवेयं रघुनन्दन ।
तवागमनमाकाङ्क्षन्वसन्वै नगराद्बहि ॥
तव पादुकयोर्न्यस्य राज्यतन्त्र परंतप ।
चतुर्दशे हि सपूर्णे वर्षेऽहनि रघूत्तम ॥
न द्रक्ष्यामि यदि त्वा तु प्रवेक्ष्यामि हुताशनम् ।
तथेति च प्रतिज्ञाय त परिष्वज्य सादरम् ॥
शत्रुघ्न च परिष्वज्य वचन चेदमब्रवीत् ।
मातर रक्ष कैकेयी मा रोष कुरु तां प्रति ॥
मया च सीतया चैव शप्तोऽसि रघुनन्दन ।
इत्युक्त्वाश्रुपरीताक्षो भ्रातर विससर्ज ह ॥
स पादुके ते भरतः स्वलकृते
महोज्ज्वले सपरिगृह्य धर्मवित् ।
प्रदक्षिण चैव चकार राघव
चकार चैवोत्तमनागमूर्धनि ॥
अथानुपूर्व्या प्रतिपूज्य तं जन
गुरूश्च मन्त्रीन्प्रकृतीस्तथानुजौ ।
व्यसर्जयद्राघववशवर्धन.
स्थित स्वधर्मे हिमवानिवाचल. ॥
त मातरो बाष्पगृहीतकण्ठ्यो
दु खेन नामन्त्रयितु हि शेकुः ।
स चैव मातॄरभिवाद्य सर्वा
रुदन्कुटी स्वा प्रविवेश रामः ॥

# हेमन्तवर्णनम्

(रा० ३।१६।१–४२)

वसतस्तस्य तु सुख राघवस्य महात्मनः।
शरद्व्यपाये हेमन्त ऋतुरिष्टः प्रवर्तत ॥
स कदाचित्प्रभातायां शर्वर्यां रघुनन्दनः॥
प्रययावभिषेकार्थं रम्या गोदावरी नदीम् ॥
प्रह्व' कलशहस्तस्तु सीतया सह वीर्यवान् ।
पृष्ठतोऽनुव्रजन्भ्राता सौमित्रिरिदमब्रवीत् ॥
अयं स काल. संप्राप्तः प्रियो यस्ते प्रियंवद ।
अलंकृत इवाभाति येन संवत्सरः शुभः॥
नीहारपरुपो लोकः पृथिवी सस्यमालिनी ।
जलान्यनुपभोग्यानि सुभगो हव्यवाहनः॥
नवाग्रयणपूजाभिरभ्यर्च्य पितृदेवताः।
कृताग्रयणकाः काले सन्तो विगतकल्मषाः॥
प्राज्यकामा जनपदाः संपन्नतरगोरसाः।
विचरन्ति महीपाला यात्रार्थं विजिगीषवः॥
सेवमाने दृढं सूर्ये दिशमन्तकसेविताम् ।
विहीनतिलकेव स्त्री नोत्तरा दिक्प्रकाशते ॥
प्रकृत्या हिमकोशाढ्यो दूरसूर्यश्च सांप्रतम् ।
यथार्थनामा सुव्यक्तं हिमवान्हिमवान्गिरिः॥
अत्यन्तसुखसंचारा मध्याह्ने स्पर्शतः सुखा.।
दिवसाः सुभगादित्याश्छायासलिलदुर्भगाः॥
मृदुसूर्याः सुनीहाराः पटुशीताः समाहिताः।
शून्यारण्या हिमध्वस्ता दिवसा भान्ति साप्रतम् ॥
निवृत्ताकाशशयनाः पुष्यनीता हिमारुणाः।
शीतवृद्धतरायामास्त्रियामा यान्ति साप्रतम् ॥

रविसङ्क्रान्तसौभाग्यस्तुषारारुणमण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ।।
ज्योत्स्ना तुषारमलिना पौर्णमास्या न राजते ।
सीतेव चातपश्यामा लक्ष्यते न च शोभते ।।
प्रकृत्या शीतलस्पर्शो हिमविद्धश्च साम्प्रतम् ।
प्रवाति पश्चिमो वायुः काले द्विगुणशीतलः ।।
बाष्पच्छन्नान्यरण्यानि यवगोधूमवन्ति च ।
शोभन्तेऽभ्युदिते सूर्ये नदद्भिः क्रौञ्चसारसैः ।।
खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः ।
शोभन्ते किंचिदालम्बाः शालयः कनकप्रभाः ।।
मयूखैरुपसर्पद्भिर्हिमनीहारसंवृतैः ।
दूरमभ्युदितः सूर्यः शशाङ्क इव लक्ष्यते ।।
आग्राह्यवीर्यः पूर्वाह्णे मध्याह्ने स्पर्शतः सुखः ।
संसक्तः किंचिदापाण्डुरातपः शोभते क्षितौ ।।
अवश्यायनिपातेन किंचित्प्रक्लिन्नशाद्वला ।
वनानां शोभते भूमिर्निविष्टतरुणातपा ।।
स्पृशन्सुविपुलं शीतमुदकं द्विरदः सुखम् ।
अत्यन्ततृषितो वन्यः प्रतिसंहरते करम् ।।
एते हि समुपासीना विहगा जलचारिणः ।
नावगाहन्ति सलिलमप्रगल्भा इवाहवम् ।।
अवश्यायतमोनद्धा नीहारतमसावृता ।
प्रसुप्ता इव लक्ष्यन्ते विपुष्पा वनराजयः ।।
बाष्पसंछन्नसलिला रुतविज्ञेयसारसाः ।
हिमार्द्रवालुकास्तीरैः सरितो भान्ति साम्प्रतम् ।।
तुषारपतनाच्चैव मृदुत्वाद्भास्करस्य च ।
शैत्यादगाग्रस्थमपि प्रायेण रसवज्जलम् ।।
जराजर्जरितैः पत्रैः शीर्णकेसरकर्णिकैः ।
नालशेषा हिमध्वस्ता न भान्ति कमलाकराः ।।
अस्मिंस्तु पुरुषव्याघ्र काले दुःखसमन्वितः ।
तपश्चरति धर्मात्मा त्वद्भक्त्या भरतः पुरे ।।

९

त्यक्त्वा राज्यं च मानं च भोगाश्च विविधान्बहून् ।
तपस्वी नियताहारः शेते शीते महीतले ॥
सोऽपि वेलामिमां नूनमभिषेकार्थमुद्यतः ।
वृतः प्रकृतिभिर्नित्य प्रयाति सरयू नदीम् ॥
अत्यन्तसुखसंवृद्धः सुकुमारो हिमार्दितः ।
कथ त्वपररात्रेषु सरयूमवगाहते ॥
पद्मपत्रेक्षण. श्याम. श्रीमान्निरुदरो महान् ।
धर्मज्ञ सत्यवादी च ह्रीनिषेधो जितेन्द्रियः ॥
प्रियाभिभाषी मधुरो दीर्घबाहुररिन्दम. ।
सत्यज्य विविधान्सौख्यानार्यं सर्वात्मना श्रित ॥
जित. स्वर्गस्तव भ्रात्रा भरतेन महात्मना ।
वनस्थमपि तापस्ये यस्त्वामनुविधीयते ॥
न पित्र्यमनुवर्तन्ते मातृकं द्विपदा इति ।
ख्यातो लोकप्रवादोऽयं भरतेनान्यथा कृतः ॥
भर्ता दशरथो यस्याः साधुश्च भरतः सुत ।
कथ नु साम्बा कैकेयी तादृशी क्रूरदर्शिनी ॥
इत्येव लक्ष्मणे वाक्य स्नेहाद्वदति धार्मिके ।
परिवादं जनन्यास्तमसहन्राघवोऽब्रवीत् ॥
न तेऽम्बा मध्यमा तात गर्हितव्या कदाचन ।
तामेवेक्ष्वाकुनाथस्य भरतस्य कथां कुरु ॥
निश्चितैव हि मे बुद्धिर्वनवासे दृढव्रता ।
भरतस्नेहसतप्ता बालिशीक्रियते पुन ॥
संस्मराम्यस्य वाक्यानि प्रियाणि मधुराणि च ।
हृद्यान्यमृतकल्पानि मन.प्रह्लादनानि च ॥
कदा ह्यह समेष्यामि भरतेन महात्मना ।
शत्रुघ्नेन च वीरेण त्वया च रघुनन्दन ॥
इत्येव विलपंस्तत्र प्राप्य गोदावरी नदीम् ।
चक्रेऽभिषेकं काकुत्स्थः सानुजः सह सीतया ॥
तर्पयित्वाथ सलिलैस्तै पितॄन्दैवतानपि ।
स्तुवन्ति स्मोदित सूर्य देवताश्च तथानघाः ॥

कृताभिषेक: स रराज राम.
सीताद्वितीय. सह लक्ष्मणेन ।
कृताभिषेकस्त्वगराजपुत्र्या
रुद्र सनन्दिर्भगवानिवेश. ।।

# सीताहरणम्

(रा० ३।४६–४७, ४९)

तदासाद्य दशग्रीवः क्षिप्रमन्तरमास्थितः।
अभिचक्राम वैदेहीं परिव्राजकरूपधृक् ॥
श्लक्ष्णकाषायसंवीतः शिखी छत्री उपानही।
वामे चांसेऽवसज्याथ शुभे यष्टिकमण्डलू।
परिव्राजकरूपेण वैदेहीमन्ववर्तत ॥
तामाससादातिबलो भ्रातृभ्यां रहितां वने।
रहितां सूर्यचन्द्राभ्यां सन्ध्यामिव महत्तमः ॥
तामपश्यत्ततो बालां राजपुत्रीं यशस्विनीम्।
रोहिणीं शशिना हीनां ग्रहवद्भृशदारुणः ॥
तमुग्रं पापकर्माणं जनस्थानगता द्रुमाः।
संदृश्य न प्रकम्पन्ते न प्रवाति च मारुतः ॥
शीघ्रस्रोताश्च तं दृष्ट्वा वीक्षन्तं रक्तलोचनम्।
स्तिमितं गन्तुमारेभे भयाद्गोदावरी नदी ॥
रामस्य त्वन्तरं प्रेप्सुर्दशग्रीवस्तदन्तरे।
उपतस्थे च वैदेहीं भिक्षुरूपेण रावणः ॥
अभव्यो भव्यरूपेण भर्तारमनुशोचतीम्।
अभ्यवर्तत वैदेहीं चित्रामिव शनैश्चरः ॥
सहसा भव्यरूपेण तृणैः कूप इवावृतः।
अतिष्ठत्प्रेक्ष्य वैदेहीं रामपत्नीं यशस्विनीम् ॥
तिष्ठन्सम्प्रेक्ष्य च तदा पत्नीं रामस्य रावणः।
शुभां रुचिरदन्तोष्ठीं पूर्णचन्द्रनिभाननाम्।
आसीनां पर्णशालायां बाष्पशोकाभिपीडिताम् ॥
स तां पद्मपलाशाक्षीं पीतकौशेयवासिनीम्।
अभ्यगच्छत वैदेहीं हृष्टचेता निशाचरः ॥
दृष्ट्वा कामशराविद्धो ब्रह्मघोषमुदीरयन्।

अब्रवीत्प्रश्रित वाक्यं रहिते राक्षसाधिप ॥
तामुत्तमा त्रिलोकाना पद्महीनामिव श्रियम् ।
विभ्राजमाना वपुषा रावण. प्रशशस ह ॥
रौप्यकाञ्चनवर्णाभे पीतकौशेयवासिनि ।
कमलाना शुभा माला पद्मिनीव च बिभ्रती ॥
ह्री श्रीः कीर्ति. शुभा लक्ष्मीरप्सरा वा शुभानने ।
भूतिर्वा त्वं वरारोहे रतिर्वा स्वैरचारिणी ॥
समा शिखरिणः स्निग्धा. पाण्डुरा दशनास्तव ।
विशाले विमले नेत्रे रक्तान्ते कृष्णतारके ॥
विशालं जघन पीनमूरू करिकरोपमौ ।
एतावुपचितौ वृत्तौ सहतौ सप्रगल्भितौ ॥
पीनोन्नतमुखौ कान्तौ स्निग्धतालफलोपमौ ।
मणिप्रवेकाभरणौ रुचिरौ ते पयोधरौ ॥
चारुस्मिते चारुदति चारुनेत्रे विलासिनि ।
मनो हरसि मे रामे नदी कूलमिवाम्भसा ॥
करान्तमितमध्यासि सुकेशे सहतस्तनि ।
नैव देवी न गन्धर्वी न यक्षी न च किनरी ।
नैवरूपा मया नारी दृष्टपूर्वा महीतले ॥
रूपमग्र्यं च लोकेषु सौकुमार्यं वयश्च ते ।
इह वासश्च कान्तारे चित्तमुन्माथयन्ति मे ॥
सा प्रतिक्राम भद्र ते न त्व वस्तुमिहार्हसि ।
राक्षसानामय वासो घोराणा कामरूपिणाम् ॥
प्रासादाग्राणि रम्याणि नगरोपवनानि च ।
सपन्नानि सुगन्धीनि युक्तान्याचरितु त्वया ॥
वर माल्य वर गन्धं वर वस्त्र च शोभने ।
भर्तारं च वरं मन्ये त्वद्युक्तमसितेक्षणे ॥
का त्वं भवसि रुद्राणा मरुता वा शुचिस्मिते ।
वसूना वा वरारोहे देवता प्रतिभासि मे ॥
नेह गच्छन्ति गन्धर्वा न देवा न च किंनरा. ।
राक्षसानामय वास कथं नु त्वमिहागता ॥

इह शाखामृगाः सिहा द्वीपिव्याघ्रमृगा वृकाः ।
ऋक्षास्तरक्षव. कङ्काः कथ तेभ्यो न बिभ्यसे ।।
मदान्विताना घोराणा कुञ्जराणां तरस्विनाम् ।
कथमेका महारण्ये न बिभेषि वरानने ।।
कासि कस्य कुतश्च त्व किनिमित्त च दण्डकान् ।
एका चरसि कल्याणि घोरान्राक्षससेवितान् ।।
इति प्रशस्ता वैदेही रावणेन महात्मना ।
द्विजातिवेषेण हि त दृष्ट्वा रावणमागतम् ।
सर्वैरतिथिसत्कारैः पूजयामास मैथिली ।।
उपानीयासन पूर्वं पाद्येनाभिनिमन्त्र्य च ।
अब्रवीत्सिद्धमित्येव तदा त सौम्यदर्शनम् ।।
द्विजातिवेषेण समीक्ष्य मैथिली
समागतं पात्रकुसुम्वधारिणम् ।
अशक्यमुद्द्रेष्टुमुपायदर्शना-
न्न्यमन्त्रयद्ब्राह्मणवत्तथागतम् ।।
इयं वृसी ब्राह्मण काममास्यता-
मिद च पाद्य प्रतिगृह्यतामिति ।
इदं च सिद्धं वनजातमुत्तम
त्वदर्थमव्यग्रमिहोपभुज्यताम् ।।
निमन्त्र्यमाणः प्रतिपूर्णभापिणी
नरेन्द्रपत्नी प्रसमीक्ष्य मैथिलीम् ।
प्रसह्य तस्या हरणे दृढं मन'
समर्पयामास वधाय रावण ।।
तत. सुवेप मृगयागत पति
प्रतीक्षमाणा सहलक्ष्मण तदा ।
निरीक्षमाणा हरित ददर्श त-
न्महद्वन नैव तु रामलक्ष्मणौ ।।
रावणेन तु वैदेही तदा पृष्टा जिहीर्षुणा ।
परिव्राजकरूपेण शशंसात्मानमात्मना ।।
ब्राह्मणश्चातिथिश्चैप अनुक्तो हि शपेत माम् ।

इति ध्यात्वा मुहूर्त तु सीता वचनमब्रवीत् ।।
दुहिता जनकस्याह मैथिलस्य महात्मनः ।
सीता नाम्नास्मि भद्र ते रामस्य महिषी प्रिया ।।
उषित्वा द्वादश समा इक्ष्वाकूणां निवेशने ।
भुञ्जाना मानुषान्भोगान्सर्वकामसमृद्धिनी ।।
तत्र त्रयोदशे वर्षे राजामन्त्रयत प्रभुः ।
अभिषेचयितु राम समेतो राजमन्त्रिभिः ।।
तस्मिन्सम्भ्रियमाणे तु राघवस्याभिषेचने ।
कैकेयी नाम भर्तार ममार्या याचते वरम् ।।
परिगृह्य तु कैकेयी श्वशुर सुकृतेन मे ।
मम प्रव्राजन भर्तुर्भरतस्याभिषेचनम् ।
द्वावयाचत भर्तार सत्यसध नृपोत्तमम् ।।
नाद्य भोक्ष्ये न च स्वप्स्ये न पास्ये च कदाचन ।
एष मे जीवितस्यान्तो रामो यदभिषिच्यते ।।
इति ब्रुवाणा कैकेयी श्वशुरो मे स पार्थिवः ।
अयाचतार्थैरन्वर्थैर्न च याच्ञा चकार सा ।।
मम भर्ता महातेजा वयसा पञ्चविशकः ।
अष्टादश हि वर्षाणि मम जन्मनि गण्यते ।।
रामेति प्रथितो लोके सत्यवाञ्शीलवाञ्शुचिः ।
विशालाक्षो महाबाहुः सर्वभूतहिते रतः ।।
कामार्तश्च महाराजः पिता दशरथः स्वयम् ।
कैकेय्याः प्रियकामार्थ त राम नाभ्यषेचयत् ।।
अभिषेकाय तु पितुः समीपं राममागतम् ।
कैकेयी मम भर्तारमित्युवाच द्रुत वचः ।।
तव पित्रा समाज्ञप्त ममेद शृणु राघव ।
भरताय प्रदातव्यमिद राज्यमकण्टकम् ।।
त्वया तु खलु वस्तव्य नव वर्षाणि पञ्च च ।
वने प्रव्रज काकुत्स्थ पितर मोचयानृतात् ।।
तथेत्युवाच ता रामः कैकेयीमकुतोभयः ।
चकार तद्वचः श्रुत्वा भर्ता मम दृढव्रतः ।।

दद्यान्न प्रतिगृह्णीयात्सत्यं ब्रूयान्न चानृतम् ।
एतद्ब्राह्मण रामस्य व्रतं धृतमनुत्तमम् ॥
तस्य भ्राता तु वैमात्रो लक्ष्मणो नाम वीर्यवान् ।
रामस्य पुरुषव्याघ्रः सहायः समरेऽरिहा ॥
स भ्राता लक्ष्मणो नाम ब्रह्मचारी दृढव्रतः ।
अन्वगच्छद्धनुष्पाणिः प्रव्रजन्त मया सह ॥
जटी तापसरूपेण मया सह सहानुजः ।
प्रविष्टो दण्डकारण्यं धर्मनित्यो दृढव्रतः ।
ते वयं प्रच्युता राज्यात्कैकेय्यास्तु कृते त्रयः ॥
विचराम द्विजश्रेष्ठ वनं गम्भीरमोजसा ।
समाश्वस मुहूर्तं तु शक्यं वस्तुमिह त्वया ॥
आगमिष्यति मे भर्ता वन्यमादाय पुष्कलम् ।
रुरून्गोधान्वराहाश्च हत्वादायामिषं बहु ॥
स त्वं नाम च गोत्रं च कुलमाचक्ष्व तत्त्वतः ।
एकश्च दण्डकारण्ये किमर्थं चरसि द्विज ॥
एवं ब्रुवत्यां सीतायां रामपत्न्या महाबलः ।
प्रत्युवाचोत्तरं तीव्रं रावणो राक्षसाधिपः ॥
येन वित्रासिता लोकाः सदेवासुरमानुषाः ।
अहं स रावणो नाम सीते रक्षोगणेश्वरः ॥
त्वां तु काञ्चनवर्णाभां दृष्ट्वा कौशेयवासिनीम् ।
रतिं स्वकेषु दारेषु नाधिगच्छाम्यनिन्दिते ॥
बह्वीनामुत्तमस्त्रीणामाहृतानामितस्ततः ।
सर्वासामेव भद्रं ते ममाग्रमहिषी भव ॥
लङ्का नाम समुद्रस्य मध्ये मम महापुरी ।
सागरेण परिक्षिप्ता निविष्टा गिरिमूर्धनि ॥
तत्र सीते मया सार्धं वनेषु विचरिष्यसि ।
न चास्य वनवासस्य स्पृहयिष्यसि भामिनि ॥
पञ्च दास्यः सहस्राणि सर्वाभरणभूषिताः ।
सीते परिचरिष्यन्ति भार्या भवसि मे यदि ॥
रावणेनैवमुक्ता तु कुपिता जनकात्मजा ।

प्रत्युवाचानवद्याङ्गी तमनादृत्य राक्षसम् ।।
महागिरिमिवाकम्प्य महेन्द्रसदृश पतिम् ।
महोदधिमिवाक्षोभ्यमह राममनुव्रता ।।
सर्वलक्षणसपन्नं न्यग्रोधपरिमण्डलम् ।
सत्यसंध महाभागमह राममनुव्रता ।।
महाबाहु महोरस्क सिहविक्रान्तगामिनम् ।
नृसिह सिहसंकाशमह राममनुव्रता ।।
पूर्णचन्द्रानन राम राजवत्स जितेन्द्रियम् ।
पृथुकीर्तिं महाबाहुमहं राममनुव्रता ।।
त्वं पुनर्जम्बुक· सिंही मामिहेच्छसि दुर्लभाम् ।
नाहं शक्या त्वया स्प्रष्टुमादित्यस्य प्रभा यथा ।।
पादपान्काञ्चनान्नून बहून्पश्यसि मन्दभाक् ।
राघवस्य प्रिया भार्यां यंस्त्वमिच्छसि राक्षस ।।
क्षुधितस्य च सिहस्य मृगशत्रोस्तरस्विन. ।
आशीविषस्य वदनाद्दंष्ट्रामादातुमिच्छसि ।
मन्दर पर्वतश्रेष्ठ पाणिना हर्तुमिच्छसि ।
कालकूट विषं पीत्वा स्वस्तिमान्गन्तुमिच्छसि ।।
अक्षि सूच्या प्रमृजसि जिह्वया लेढि च क्षुरम् ।
राघवस्य प्रिया भार्यामधिगन्तु त्वमिच्छसि ।।
अवसज्य शिला कण्ठे समुद्र तर्तुमिच्छसि ।
सूर्याचन्द्रमसौ चोभौ पाणिभ्या हर्तुमिच्छसि ।।
यो रामस्य प्रिया भार्यां प्रधर्षयितुमिच्छसि ।
अग्नि प्रज्वलित दृष्ट्वा वस्त्रेणाहर्तुमिच्छसि ।।
कल्याणवृत्तां यो भार्यां रामस्याहर्तुमिच्छसि ।
अयोमुखाना शूलाना मध्ये चरितुमिच्छसि ।
रामस्य सदृशी भार्यां योऽधिगन्तु त्वमिच्छसि ।।
यदन्तर सिंहसृगालयोर्वने
यदन्तरं स्यन्दनिकासमुद्रयोः ।
सुराग्र्यसौवीरकयोर्यदन्तर
तदन्तरं दाशरथेस्तवैव च ।।

यदन्तर काञ्चनसीसलोहयो-
र्यदन्तरं चन्दनवारिपंकयोः ।
यदन्तरं हस्तिविडालयोर्वने
तदन्तरं दाशरथेस्तवैव च ॥
यदन्तर वायसवैनतेययो-
र्यदन्तर मद्गुमयूरयोरपि ।
यदन्तरं हंसकगृध्रयोर्वने
तदन्तर दाशरथेस्तवैव च ॥
तस्मिन्सहस्राक्षसमप्रभावे
रामे स्थिते कार्मुकवाणपाणौ ।
हृतापि तेऽहं न जरां गमिष्ये
आज्य यथा मक्षिकयावगीर्णम् ॥
इतीव तद्वाक्यमदुष्टभावा
सुदुष्टमुक्त्वा रजनीचरं तम् ।
गात्रप्रकम्पाद्व्यथिता वभूव
वातोद्धता सा कदलीव तन्वी ॥
तां वेपमानामुपलक्ष्य सीतां
स रावणो मृत्युसमप्रभावः ।
कुलं वल नाम च कर्म चात्मनः
समाचचक्षे भयकारणार्थम् ॥
सीताया वचनं श्रुत्वा दशग्रीवः प्रतापवान् ।
हस्ते हस्तं समाहन्य चकार सुमहद्वपुः ॥
स मैथिली पुनर्वाक्यं वभाषे वाक्यकोविदः ।
नोन्मत्तया श्रुतौ मन्ये मम वीर्यपराक्रमौ ॥
उद्वहेयं भुजाभ्यां तु मेदिनीमम्बरे स्थितः ।
आपिवेयं समुद्रं च मृत्युं हन्यां रणे स्थितः ॥
अर्कं तुद्यां शरैस्तीक्ष्णैर्विभिन्द्यां हि महीतलम् ।
कामरूपेण उन्मत्ते पश्य मां कामरूपिणम् ॥
एवमुक्तवतस्तस्य रावणस्य शिखिप्रभे ।
क्रुद्धस्य हरिपर्यन्ते रक्ते नेत्रे वभूवतुः ॥

सद्य. सौम्य परित्यज्य तीक्ष्णरूपं स रावणः।
स्व रूप कालरूपाभ भेजे वैश्रवणानुजः।।
संरक्तनयन. श्रीमास्तप्तकाञ्चनभूषण.।
क्रोधेन महताविष्टो नीलजीमूतसनिभ.।।
दशास्यो विंशतिभुजो बभूव क्षणदाचर ।
स परिव्राजकच्छद्म महाकायो विहाय तत् ।।
प्रतिपेदे स्वक रूपं रावणो राक्षसाधिप ।
रक्ताम्बरधरस्तस्थौ स्त्रीरत्न प्रेक्ष्य मैथिलीम् ।।
स तामसितकेशान्ता भास्करस्य प्रभामिव।
वसनाभरणोपेता मैथिली रावणोऽब्रवीत् ।।
त्रिषु लोकेषु विख्यात यदि भर्तारमिच्छसि।
मामाश्रय वरारोहे तवाह सदृश पति ।।
मा भजस्व चिराय त्वमह श्लाघ्य पतिस्तव।
नैव चाह क्वचिद्भद्रे करिष्ये तव विप्रियम् ।।
त्यज्यता मानुषो भावो मयि भाव प्रणीयताम्।
राज्याच्च्युतमसिद्धार्थं राम परिमितायुषम्।
कैर्गुणैरनुरक्तासि मूढे पण्डितमानिनि।।
य स्त्रियो वचनाद्राज्य विहाय ससुहृज्जनम्।
अस्मिन्व्यालानुचरिते वने वसति दुर्मति.।।
इत्युक्त्वा मैथिली वाक्य प्रियार्हां प्रियवादिनीम् ।।
अभिगम्य सुदुष्टात्मा राक्षस. काममोहित ।
जग्राह रावण. सीता बुध खे रोहिणीमिव ।।
वामेन सीता पद्माक्षी मूर्धजेषु करेण स ।
ऊर्वोस्तु दक्षिणेनैव परिजग्राह पाणिना ।।
त दृष्ट्वा गिरिशृङ्गाभ तीक्ष्णदष्ट्र महाभुजम्।
प्राद्रवन्मृत्युसकाश भयार्ता वनदेवताः।।
स च मायामयो दिव्य खरयुक्त खरस्वन ।
प्रत्यदृश्यत हेमाङ्गो रावणस्य महारथ.।।
ततस्ता परुषैर्वाक्यैरभितर्ज्य महास्वन ।
अकेनादाय वैदेही रथमारोहयत्तदा ।।

सा गृहीतातिचुक्रोश रावणेन यशस्विनी ।
रामेति सीता दु.खार्ता राम दूरं गतं वने ।।
तामकामां स कामार्त पन्नगेन्द्रवधूमिव ।
विचेष्टमानामादाय उत्पपाताथ रावण. ।।
ततः सा राक्षसेन्द्रेण ह्रियमाणा विहायसा ।
भृशं चुक्रोश मत्तेव भ्रान्तचित्ता यथातुरा ।।
हा लक्ष्मण महाबाहो गुरुचित्तप्रसादक ।
ह्रियमाणा न जानीषे रक्षसा कामरूपिणा ।।
जीवित सुखमर्थं च धर्महेतो॰ परित्यजन् ।
ह्रियमाणामधर्मेण मा राघव न पश्यसि ।।
ननु नामाविनीतानां विनेतासि परंतप ।
कथमेवविधं पाप न त्व शाधि हि रावणम् ।।
ननु सद्योऽविनीतस्य दृश्यते कर्मणः फलम् ।
कालोऽप्यङ्गीभवत्यत्र सस्यानामिव पक्तये ।।
त्वं कर्म कृतवानेतत्कालोपहतचेतन. ।
जीवितान्तकरं घोर रामाद्व्यसनमाप्नुहि ।।
हन्तेदानी सकामा तु कैकेयी बान्धवै. सह ।
ह्रियेय धर्मकामस्य धर्मपत्नी यशस्विन॰ ।।
आमन्त्रये जनस्थानं कर्णिकाराश्च पुष्पितान् ।
क्षिप्र रामाय शसध्व सीता हरति रावण. ।।
माल्यवन्तं शिखरिण वन्दे प्रस्रवणं गिरिम् ।।
क्षिप्र रामाय शंसध्व सीता हरति रावण. ।।
हंससारससघुष्टा वन्दे गोदावरी नदीम् ।
क्षिप्र रामाय शंसध्वं सीता हरति रावण. ।।
दैवतानि च यान्यस्मिन्वने विविधपादपे ।
नमस्करोम्यह तेभ्यो भर्तुः शंसत मा हृताम् ।।
यानि कानिचिदप्यत्र सत्त्वानि विविधानि च ।
सर्वाणि शरण यामि मृगपक्षिगणानि वै ।।
ह्रियमाणां प्रियां भर्तु॰ प्राणेभ्योऽपि गरीयसीम् ।
विवशा ते हृता सीता रावणेनेति शंसत ।।

विदित्वा तु महाबाहुरमुत्रापि महाबल. ।
आनेष्यति पराक्रम्य वैवस्वतहृतामपि ।।
सा तदा करुणा वाचो विलपन्ती सुदु.खिता ।
वनस्पतिगत गृध्रं ददर्शायतलोचना ।।
सा तमुद्वीक्ष्य सुश्रोणी रावणस्य वशगता ।
समाक्रन्दद्भयपरा दु खोपहतया गिरा ।।
जटायो पश्य मामार्य ह्रियमाणामनाथवत् ।
अनेन राक्षसेन्द्रेण करुण पापकर्मणा ।।
नैष वारयितु शक्यस्त्वया क्रूरो निशाचरः ।
सत्त्ववाञ्जितकाशी च सायुधश्चैव दुर्मतिः ।।
रामाय तु यथातत्त्व जटायो हरण मम ।
लक्ष्मणाय च तत्सर्वमाख्यातव्यमशेषतः ।।

# सीतान्वेषणम्

(रा० ३।६०–६१)

भृशमाव्रजमानस्य तस्याधोवामलोचनम् ।
प्रास्फुरच्चास्खलद्रामो वेपथुश्चास्य जायते ।।
उपालक्ष्य निमित्तानि सोऽशुभानि मुहुर्मुहुः ।
अपि क्षेम तु सीताया इति वै व्याजहार ह ।।
त्वरमाणो जगामाथ सीतादर्शनलालस. ।
शून्यमावसथ दृष्ट्वा वभूवोद्विग्नमानस ।।
उद्भ्रमन्निव वेगेन विक्षिपन्रघुनन्दनः ।
तत्र तत्रोटजस्थानमभिवीक्ष्य समन्तत ।।
ददर्श पर्णशाला च सीतया रहितां तदा ।
श्रिया विरहिता ध्वस्ता हेमन्ते पद्मिनीमिव ।।
रुदन्तमिव वृक्षैश्च ग्लानपुष्पमृगद्विजम् ।
श्रिया विहीनं विध्वस्त सत्यक्त वनदैवतैः ।।
विप्रकीर्णाजिनकुश विप्रविद्धवृसीकटम् ।
दृष्ट्वा शून्योटजस्थान विललाप पुनः पुनः ।।
हृता मृता वा नष्टा वा भक्षिता वा भविष्यति ।
निलीनाप्यथवा भीरुरथवा वनमाश्रिता ।।
वृक्षाद्वृक्ष प्रधावन्स गिरीश्चापि नदीनदम् ।
वभ्राम विलपन्राम. शोकपङ्कार्णवाप्लुत ।।
अस्ति कच्चित्त्वया दृष्टा सा कदम्वप्रिया प्रिया ।
कदम्व यदि जानीषे शस सीता शुभाननाम् ।।
स्निग्धपल्लवसकाशां पीतकौशेयवासिनीम् ।
शसस्व यदि सा दृष्टा विल्व विल्वोपमस्तनी ।।
अथवार्जुन शस त्वं प्रिया तामर्जुनप्रियाम् ।
जनकस्य सुता तन्वी यदि जीवति वा न वा ।।
ककुभ ककुभोरु ता व्यक्त जानाति मैथिलीम् ।
लतापल्लवपुष्पाढ्यो भाति ह्येष वनस्पतिः ।।

भ्रमरैरुपगीतश्च यथा द्रुमवरो ह्यसि ।
एष व्यक्त विजानाति तिलकस्तिलकप्रियाम् ।।
अशोक शोकापनुद शोकोपहतचेतनम् ।
त्वन्नामान कुरु क्षिप्र प्रियासदर्शनेन माम् ।।
यदि ताल त्वया दृष्टा पक्वतालोपमस्तनी ।
कथयस्व वरारोहा कारुण्य यदि ते मयि ।।
यदि दृष्टा त्वया जम्बो जाम्बूनदसमप्रभा ।
प्रिया यदि विजानासि नि शङ्क कथयस्व मे ।
अहो त्व कर्णिकाराद्य पुष्पित शोभसे भृशम् ।
कर्णिकारप्रिया साध्वी शस दृष्टा यदि प्रिया ।
चूतनीपमहासालान्पनसान्कुररास्तथा ।
दाडिमानपि तान्गत्वा दृष्ट्वा रामो महायशा ।।
बकुलानथ पुनागाश्चन्दनान्केतकास्तथा ।
पृच्छन्रामो वने भ्रान्त उन्मत्त इव लक्ष्यते ।।
अथवा मृगशावाक्षी मृग जानासि मैथिलीम् ।
मृगविप्रेक्षणी कान्ता मृगीभि सहिता भवेत् ।।
गज सा गजनासोरूर्यदि दृष्टा त्वया भवेत् ।
ता मन्ये विदिता तुभ्यमाख्याहि वरवारण ।
शार्दूल यदि सा दृष्टा प्रिया चन्द्रनिभानना ।
मैथिली मम विस्रब्धः कथयस्व न ते भयम् ।।
किं धावसि प्रिये नून दृष्टासि कमलेक्षणे ।
वृक्षैराच्छाद्य चात्मान किं मा न प्रतिभाषसे ।।
तिष्ठ तिष्ठ वरारोहे न तेऽस्ति करुणा मयि ।
नात्यर्थ हास्यशीलासि किमर्थं मामुपेक्षसे ।।
पीतकौशेयकेनासि सूचिता वरवर्णिनि ।
धावन्त्यपि मया दृष्टा तिष्ठ यद्यस्ति सौहृदम् ।।
नैव सा नूनमथवा हिसिता चारुहासिनी ।
कृच्छ्र प्राप्त हि मा नून यथापेक्षितुमर्हति ।।
व्यक्त सा भक्षिता बाला राक्षसै. पिशिताशनैः ।
विभज्याङ्गानि सर्वाणि मया विरहिता प्रिया ।।

नूनं तच्छुभदन्तोष्ठ सुनास शुभकुण्डलम् ।
पूर्णचन्द्रनिभ ग्रस्त मुख निष्प्रभता गतम् ।।
सा हि चन्दनवर्णाभा ग्रीवा ग्रैवेयकोचिता ।
कोमला विलपन्त्यास्तु कान्ताया भक्षिता शुभा ।।
नूनं विक्षिप्यमाणौ तौ वाहू पल्लवकोमलौ ।
भक्षितौ वेपमानाग्रौ सहस्ताभरणाङ्गदौ ।।
मया विरहिता बाला रक्षसा भक्षणाय वै ।
सार्थेनेव परित्यक्ता भक्षिता बहुबान्धवा ।।
हा लक्ष्मण महाबाहो पश्यसे त्वं प्रियां क्वचित् ।
हा प्रिये क्व गता भद्रे हा सीतेति पुनः पुन· ।।
इत्येव विलपन्राम· परिधावन्वनाद्वनम् ।
क्वचिदुद्भ्रमते योगात्क्वचिद्विभ्रमते बलात् ।
क्वचिन्मत्त इवाभाति कान्तान्वेषणतत्परः ।।
स वनानि नदी. शैलान्गिरिप्रस्रवणानि च ।
काननानि च वेगेन भ्रमत्यपरिसंस्थित· ।।
तदा स गत्वा विपुल महद्वनं
परीत्य सर्व त्वथ मैथिली प्रति ।
अनिष्ठिताशः स चकार मार्गणे
पुनः प्रियायाः परम परिश्रमम् ।।
दृष्ट्वाश्रमपद शून्य रामो दशरथात्मजः ।
रहिता पर्णशाला च प्रविद्धान्यासनानि च ।।
अदृष्ट्वा तत्र वैदेही सनिरीक्ष्य च सर्वशः ।
उवाच रामः प्राक्रुश्य प्रगृह्य रुचिरौ भुजौ ।।
क्व नु लक्ष्मण वैदेही कं वा देशमितो गता ।
केनाहृता वा सौमित्रे भक्षिता केन वा प्रिया ।।
वृक्षेणावार्य यदि मा सीते हसितुमिच्छसि ।
अलं ते हसितेनाद्य मां भजस्व सुदुःखितम् ।।
यैः परिक्रीडसे सीते विश्वस्तैर्मृगपोतकैः ।
एते हीनास्त्वया सौम्ये ध्यायन्त्यस्राविलेक्षणाः ।।
सीतया रहितोऽहं वै न हि जीवामि लक्ष्मण ।

वृत शोकेन महता सीताहरणजेन माम् ।।
परलोके महाराजो नून द्रक्ष्यति मे पिता ।
कथ प्रतिज्ञा सश्रुत्य मया त्वमभियोजितः ।।
अपूरयित्वा त कालं मत्सकाशमिहागत ।
कामवृत्तमनार्य वा मृषावादिनमेव च ।
धिक्त्वामिति परे लोके व्यक्त वक्ष्यति मे पिता ।।
विवश शोकसतप्त दीन भग्नमनोरथम् ।
मामिहोत्सृज्य करुण कीर्तिर्नरमिवानृजुम् ।।
क्व गच्छसि वरारोहे मा मोत्सृज सुमध्यमे ।
त्वया विरहितश्चाह त्यक्ष्ये जीवितमात्मनः ।।
इतीव विलपन्राम सीतादर्शनलालस ।
न ददर्श सुदु.खार्तो राघवो जनकात्मजाम् ।।
अनासादयमान त सीता शोकपरायणम् ।
पङ्कमासाद्य विपुल सीदन्तमिव कुञ्जरम् ।
लक्ष्मणो राममत्यर्थमुवाच हितकाम्यया ।।
मा विषाद महाबुद्धे कुरु यत्न मया सह ।
इद गिरिवर वीर बहुकन्दरशोभितम् ।।
प्रियकाननसचारा वनोन्मत्ता च मैथिली ।
सा वन वा प्रविष्टा स्यान्नलिनी वा सुपुष्पिताम् ।।
सरित वापि सप्राप्ता मीनवञ्जुलसेविताम् ।
स्नातुकामा निलीना स्याद्धासकामा वने क्वचित् ।।
वित्रासयितुकामा वा लीना स्यात्कानने क्वचित् ।।
जिज्ञासमाना वैदेही त्वा मा च पुरुषर्षभ ।
तस्या ह्यन्वेषणे श्रीमन्क्षिप्रमेव यतावहे ।।
वन सर्व विचिनुवो यत्र सा जनकात्मजा ।
मन्यसे यदि काकुत्स्थ मा स्म शोके मन कृथा. ।।
एवमुक्त स सौहार्दाल्लक्ष्मणेन समाहित ।
सह सौमित्रिणा रामो विचेतुमुपचक्रमे ।।
तौ वनानि गिरीश्चैव सरितश्च सरासि च ।
निखिलेन विचिन्वन्तौ सीता दशरथात्मजौ ।।

तस्य शैलस्य सानूनि शिलाश्च शिखराणि च ।
निखिलेन विचिन्वन्तौ नैव तामभिजग्मतुः ।।
विचित्य सर्वतः शैलं रामो लक्ष्मणमब्रवीत् ।
नेह पश्यामि सौमित्रे वैदेहीं पर्वते शुभाम् ।।
ततो दु.खाभिसंतप्तो लक्ष्मणो वाक्यमब्रवीत् ।
विचरन्दण्डकारण्यं भ्रातर दीप्ततेजसम् ।।
प्राप्स्यसे त्वं महाप्राज्ञ मैथिली जनकात्मजाम् ।
यथा विष्णुर्महाबाहुर्बलिं बद्ध्वा महीमिमाम् ।।
एवमुक्तस्तु वीरेण लक्ष्मणेन स राघवः ।
उवाच दीनया वाचा दु खाभिहतचेतनः ।।
वन सुविचित सर्वं पद्मिन्य. फुल्लपङ्कजाः ।
गिरिश्चायं महाप्राज्ञ बहुकन्दरनिर्झरः ।
न हि पश्यामि वैदेहीं प्राणेभ्योऽपि गरीयसीम् ।।
एवं स विलपन्रामः सीताहरणकर्शितः ।
दीनः शोकसमाविष्टो मुहूर्तं विह्वलोऽभवत् ।।
स विह्वलितसर्वाङ्गो गतबुद्धिर्विचेतनः ।
विषसादातुरो दीनो नि.श्वस्याशीतमायतम् ।।
बहुशः स तु निःश्वस्य रामो राजीवलोचनः ।
हा प्रियेति विचुक्रोश बहुशो बाष्पगद्गदः ।।
तं सान्त्वयामास ततो लक्ष्मण· प्रियबान्धवम् ।
बहुप्रकार शोकार्तः प्रश्रितः प्रश्रिताञ्जलिः ।।
अनादृत्य तु तद्वाक्यं लक्ष्मणोष्टपुटच्युतम् ।
अपश्यंस्तां प्रिया सीता प्राक्रोशत्स पुनः पुनः ।।

## रामविलापः

(रा० ३।६३)

स राजपुत्र. प्रियया विहीन.
शोकेन मोहेन च पीड्यमान ।
विषादयन्भ्रातरमार्तरूपो
भूयो विषाद प्रविवेश तीव्रम् ।।
स लक्ष्मण शोकवशाभिपन्न
शोके निमग्नो विपुले तु राम· ।
उवाच वाक्य व्यसनानुरूप-
मुष्ण विनि श्वस्य रुदन्सशोकम् ।।
न मद्विधो दुष्कृतकर्मकारी
मन्ये द्वितीयोऽस्ति वसुधरायाम् ।
शोकानुशोको हि परपराया
मामेति भिन्दन्हृदय मनश्च ।।
पूर्वं मया नूनमभीप्सितानि
पापानि कर्माण्यसकृत्कृतानि ।
तत्रायमद्यापतितो विपाको
दु.खेन दु ख यदह विशामि ।।
राज्यप्रणाश स्वजनैर्वियोग
पितुर्विनाशो जननीवियोग ।
सर्वाणि मे लक्ष्मण शोकवेग-
मापूरयन्ति प्रविचिन्तितानि ।।
सर्वं तु दु ख मम लक्ष्मणेद
शान्तं शरीरे वनमेत्य क्लेशम् ।
सीतावियोगात्पुनरभ्युदीर्ण
काष्ठैरिवाग्नि सहसोपदीप्त. ।।
सा नूनमार्या मम राक्षसेन
ह्यभ्याहृता ख समुपेत्य भीरु ।

अप्यस्वर सुस्वरविप्रलापा
भयेन विक्रन्दितवत्यभीक्ष्णम् ।।
तौ लोहितस्य प्रियदर्शनस्य
सदोचितावुत्तमचन्दनस्य ।
वृत्तौ स्तनौ शोणितपङ्कदिग्धौ
नूनं प्रियाया मम नाभिपात ।।
तच्छ्लक्ष्णसुव्यक्तमृदुप्रलापं
तस्या मुखं कुञ्चितकेशभारम् ।
रक्षोवश नूनमुपागताया
न भ्राजते राहुमुखे यथेन्दुः ।।
तां हारपाशस्य सदोचितान्ता
ग्रीवां प्रियाया मम सुव्रताया. ।
रक्षासि नूनं परिपीतवन्ति
शून्ये हि भित्त्वा रुधिराशनानि ।।
मया विहीना विजने वने सा
रक्षोभिरावृत्य विकृष्यमाणा ।
नूनं विनादं कुररीव दीना
सा मुक्तवत्यायतकान्तनेत्रा ।।
अस्मिन्मया सार्धमुदारशीला
शिलातले पूर्वमुपोपविष्टा ।
कान्तस्मिता लक्ष्मण जातहासा
त्वामाह सीता बहुवाक्यजातम् ।।
गोदावरीयं सरिता वरिष्ठा
प्रिया प्रियाया मम नित्यकालम् ।
अप्यत्र गच्छेदिति चिन्तयामि
नैकाकिनी याति हि सा कदाचित् ।।
पद्मानना पद्मपलाशनेत्रा
पद्मानि वानेतुमभिप्रयाता ।
तदप्ययुक्तं न हि सा कदाचि-
न्मया विना गच्छति पङ्कजानि ।।

काम त्विद पुष्पितवृक्षषण्ड
नानाविधै. पक्षिगणैरुपेतम् ।
वन प्रयाता नु तदप्ययुक्त-
मेकाकिनी सातिबिभेति भीरु ।।
आदित्य भो लोककृताकृतज्ञ
लोकस्य सत्यानृतकर्मसाक्षिन् ।
मम प्रिया सा क्व गता हृता वा
शसस्व मे शोकहृतस्य सर्वम् ।।
लोकेषु सर्वेषु न नास्ति किचि-
द्यत्तेन नित्य विदित भवेत्तत् ।
शसस्व वायो कुलपालिनी ता
मृता हृता वा पथि वर्तते वा ।।
इतीव त शोकविधेयदेह
राम विसज्ञ विलपन्तमेव ।
उवाच सौमित्रिरदीनसत्त्वो
न्याय्ये स्थित कालयुत च वाक्यम् ।।
शोक विसृज्याद्य धृति भजस्व
सोत्साहता चास्तु विमार्गणेऽस्या ।
उत्साहवन्तो हि नरा न लोके
सीदन्ति कर्मस्वतिदुष्करेषु ।।
इतीव सौमित्रिमुदग्रपौरुष
ब्रुवन्तमार्त रघुवशसत्तम. ।
न चिन्तयामास धृति विमुक्तवा-
न्पुनश्च दु ख महदप्युपागमत् ।।

# माल्यवत्पर्वते वर्षागमः

(रा० ४।२८।१–६४)

स तदा वालिन हत्वा सुग्रीवमभिषिच्य च ।
वसन्माल्यवतः पृष्ठे रामो लक्ष्मणमब्रवीत् ।।
अयं स कालः सप्राप्त समयोऽद्य जलागमः ।
संपश्य त्व नभो मेघैः सवृत गिरिसनिभैः ।।
नवमासधृतं गर्भ भास्करस्य गभस्तिभिः ।
पीत्वा रस समुद्राणां द्यौः प्रसूते रसायनम् ।।
शक्यमम्वरमारुह्य मेघसोपानपंक्तिभि ।
कुटजार्जुनमालाभिरलकर्तुं दिवाकरः ।।
सध्यारागोत्थितैस्ताम्रैरन्तेष्वपि च पाण्डुभिः ।
स्निग्धैरभ्रपटच्छेदैर्वद्धव्रणमिवाम्वरम् ।।
मन्दमारुतनि श्वास सध्याचन्दनरञ्जितम् ।
आपाण्डुजलदं भाति कामातुरमिवाम्वरम् ।।
एषा घर्मपरिक्लिष्टा नववारिपरिप्लुता ।
सीतेव शोकसंतप्ता मही वाष्पं विमुञ्चति ।।
मेघोदरविनिर्मुक्ताः कर्पूरदलशीतलाः ।
शक्यमञ्जलिभिः पातु वाताः केतकगन्धिनः ।।
एष फुल्लार्जुनः शैलः केतकैरभिवासितः ।
सुग्रीव इव शान्तारिर्धाराभिरभिषिच्यते ।।
मेघकृष्णाजिनधरा धारायज्ञोपवीतिनः ।
मारुतापूरितगुहाः प्रावीता इव पर्वताः ।।
कशाभिरिव हैमीभिर्विद्युद्भिरभिताडितम् ।
अन्तस्तनितनिर्घोषं सवेदनमिवाम्वरम् ।।
नीलमेघाश्रिता विद्युत्स्फुरन्ती प्रतिभाति मे ।
स्फुरन्ती रावणस्याङ्के वैदेहीव तपस्विनी ।।
इमास्ता मन्मथवता हिताः प्रतिहता दिशः ।

अनुलिप्ता इव घनैर्नष्टग्रहनिशाकराः ।।
क्वचिद्बाष्पाभिसरुद्धान्वर्षागमसमुत्सुकान् ।
कुटजान्पश्य सौमित्रे पुष्पितान्गिरिसानुषु ।
मम शोकाभिभूतस्य कामसदीपनान्स्थितान् ।।
रज प्रशान्त स हिमोऽद्य वायु-
र्निदाघदोषप्रसरा प्रशान्ता. ।
स्थिता हि यात्रा वसुधाधिपानां
प्रवासिनो यान्ति नराः स्वदेशान् ।।
सप्रस्थिता मानसवासलुब्धाः
प्रियान्विता. सम्प्रति चक्रवाका ।
अभीक्ष्णवर्षोदकविक्षतेषु
यानानि मार्गेषु न सपतन्ति ।।
क्वचित्प्रकाश क्वचिदप्रकाश
नभ· प्रकीर्णाम्बुधर विभाति ।
क्वचित्क्वचित्पर्वतसनिरुद्धं
रूप यथा शान्तमहार्णवस्य ।।
व्यामिश्रितं सर्जकदम्बपुष्पै-
र्नव जल पर्वतधातुताम्रम् ।
मयूरकेकाभिरनुप्रयात
शैलापगा शीघ्रतरं वहन्ति ।।
रसाकुल षट्पदसनिकाश
प्रभुज्यते जम्बुफल प्रकामम् ।
अनेकवर्ण पवनावधूत
भूमौ पतत्याम्रफल विपक्वम् ।।
विद्युत्पताका सबलाकमाला·
शैलेन्द्रकूटाकृतिसनिकाशाः ।
गर्जन्ति मेघा समुदीर्णनादा
मत्ता गजेन्द्रा इव सयुगस्था ।।
वर्षोदकाप्यायितशाद्वलानि
प्रवृत्तनृत्तोत्सवबर्हिणानि ।

वनानि निर्वृष्टवलाहकानि
पश्यापराह्णेष्वधिक विभान्ति ॥
समुद्वहन्तः सलिलातिभारं
वलाकिनो वारिधरा नदन्तः ।
महत्सु शृङ्गेषु महीधराणा
विश्रम्य विश्रम्य पुनः प्रयान्ति ॥
मेघाभिकामा परिसपतन्ती
समोदिता भाति वलाकपंक्तिः ।
वातावधूता वरपौण्डरीकी
लम्वेव माला रुचिराम्बरस्य ॥
वालेन्द्रगोपान्तरचित्रितेन
विभाति भूमिर्नवशाद्वलेन ।
गात्रानुपृक्तेन शुकप्रभेण
नारीव लाक्षोक्षितकम्वलेन ॥
निद्रा शनैः केशवमभ्युपैति
द्रुतं नदी सागरमभ्युपैति ।
हृष्टा वलाका घनमभ्युपैति
कान्ता सकामा प्रियमभ्युपैति ॥
जाता वनान्ताः शिखिसुप्रनृत्ता
जाताः कदम्बाः सकदम्वशाखा. ।
जाता वृषा गोषु समानकामा
जाता मही सस्यवनाभिरामा ॥
वहन्ति वर्षन्ति नदन्ति भान्ति
ध्यायन्ति नृत्यन्ति समाश्वसन्ति ।
नद्यो घना मत्तगजा वनान्ताः
प्रियाविहीनाः शिखिन. प्लवङ्गमाः ॥
प्रहर्षिताः केतकिपुष्पगन्ध-
माघ्राय मत्ता वननिर्झरेषु ।
प्रपातशब्दाकुलिता गजेन्द्राः
सार्धं मयूरै. समदा नदन्ति ॥

धारानिपातैरभिहन्यमाना
कदम्बशाखासु विलम्बमानाः ।
क्षणार्जितं पुष्परसावगाढं
शनैर्मदं षट्चरणास्त्यजन्ति ॥
अङ्गारचूर्णोत्करसंनिकाशैः
फलैः सुपर्याप्तरसैः समृद्धैः ।
जम्बूद्रुमाणां प्रविभान्ति शाखा
निपीयमाना इव षट्पदौघैः ॥
तडित्पताकाभिरलंकृतानां-
मुदीर्णगम्भीरमहारवाणाम् ।
विभान्ति रूपाणि बलाहकानां
रणोत्सुकानामिव वारणानाम् ॥
मार्गानुगः शैलवनानुसारी
संप्रस्थितो मेघरवं निशम्य ।
युद्धाभिकामः प्रतिनादशङ्की
मत्तो गजेन्द्रः प्रतिसंनिवृत्तः ॥
क्वचित्प्रगीता इव षट्पदौघैः
क्वचित्प्रनृत्ता इव नीलकण्ठैः ।
क्वचित्प्रमत्ता इव वारणेन्द्रै-
र्विभान्त्यनेकाश्रयिणो वनान्ताः ॥
कदम्बसर्जार्जुनकन्दलाढ्या
वनान्तभूमिर्मधुवारिपूर्णा ।
मयूरमत्ताभिरुतप्रनृत्तै-
रापानभूमिप्रतिमा विभाति ॥
मुक्तासमाभं सलिलं पतद्वै
सुनिर्मलं पत्रपुटेषु लग्नम् ।
हृष्टा विवर्णच्छदना विहङ्गाः
सुरेन्द्रदत्तं तृषिता पिबन्ति ॥
षट्पादतन्त्रीमधुराभिधानं
प्लवङ्गमोदीरितकण्ठतालम् ।

आविष्कृतं मेघमृदङ्गनादै-
र्वनेषु संगीतमिव प्रवृत्तम् ॥
क्वचित्प्रनृत्तैः क्वचिदुन्नदद्भिः
क्वचिच्च वृक्षाग्रनिषण्णकायैः ।
व्यालम्बबर्हाभरणैर्मयूरै-
र्वनेषु संगीतमिव प्रवृत्तम् ॥
स्वनैर्घनानां प्लवगाः प्रबुद्धा
विहाय निद्रां चिरसंनिरुद्धाम् ।
अनेकरूपाकृतिवर्णनादा
नवाम्बुधाराभिहता नदन्ति ॥
नद्यः समुद्वाहितचक्रवाका-
स्तटानि शीर्णान्यपवाहयित्वा ।
दृप्ता नवप्रावृतपूर्णभोगा-
द्रुतं स्वभर्तारमुपोपयन्ति ॥
नीलेषु नीला नववारिपूर्णा
मेघेषु मेघाः प्रतिभान्ति सक्ताः ।
दवाग्निदग्धेषु दवाग्निदग्धाः
शैलेषु शैला इव बद्धमूलाः ॥
प्रमत्तसंनादितबर्हिणानि
सशक्रगोपाकुलशाद्वलानि ।
चरन्ति नीपार्जुनवासितानि
गजाः सुरम्याणि वनान्तराणि ॥
नवाम्बुधाराहतकेसराणि
ध्रुवं परिष्वज्य सरोरुहाणि ।
कदम्बपुष्पाणि सकेसराणि
नवानि हृष्टा भ्रमराः पिबन्ति ॥
मत्ता गजेन्द्रा मुदिता गवेन्द्रा
वनेषु विक्रान्ततरा मृगेन्द्राः ।
रम्या नगेन्द्रा निभृता नरेन्द्राः
प्रक्रीडितो वारिधरैः सुरेन्द्रः ॥

मेघा. समुद्भूतसमुद्रनादा
महाजलौघैर्गगनावलम्बा. ।
नदीस्तटाकानि सरासि वापी-
र्मही च कृत्स्नामपवाहयन्ति ।।
वर्षप्रवेगा विपुला. पतन्ति
प्रवान्ति वाता. समुदीर्णवेगा ।
प्रनष्टकूला प्रवहन्ति शीघ्र
नद्यो जल विप्रतिपन्नमार्गा. ।।
नरैर्नरेन्द्रा इव पर्वतेन्द्रा.
सुरेन्द्रनीतै पवनोपनीतै. ।
घनाम्बुकुम्भैरभिषिच्यमाना
रूप श्रिय स्वामिव दर्शयन्ति ।।
घनोपगूढं गगन न तारा
न भास्करो दर्शनमभ्युपैति ।
नवैर्जलौघैर्धरणी वितृप्ता
तमोविलिप्ता न दिश· प्रकाशा. ।।
महान्ति कूटानि महीधराणां
धाराविधौतान्यधिक विभान्ति ।
महाप्रमाणैर्विपुलै. प्रपातै-
र्मुक्ताकलापैरिव लम्बमानैः ।।
शैलोपलप्रस्खलमानवेगा
शैलोत्तमाना विपुलाः प्रपाता ।
गुहासु संनादितबर्हिणासु
हारा विकीर्यन्त इवावभान्ति ।।
शीघ्र प्रवेगा विपुला प्रपाता
निर्धौतश्रृङ्गोपतला गिरीणाम् ।
मुक्ताकलापप्रतिमाः पतन्तो
महागुहोत्सङ्गतलैर्ध्रियन्ते ।।
सुरतामर्दविच्छिन्ना स्वर्गस्त्रीहारमौक्तिका ।
पतन्ति चातुला दिक्षु तोयधारा समन्तत ।।

विलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः ।
विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः ।।
वृत्ता यात्रा नरेन्द्राणां सेना पथ्येव वर्तते ।
वैराणि चैव मार्गाश्च सलिलेन समीकृताः ।।
मासि प्रौष्ठपदे ब्रह्म ब्राह्मणानां विवक्षताम् ।
अयमध्यायसमयः सामगानामुपस्थितः ।।
विवृत्तकर्मायतनो नूनं संचितसंचयः ।।
आषाढीमभ्युपगतो भरतः कोशलाधिपः ।।
नूनमापूर्यमाणायाः सरय्वा वर्धते रयः ।
मां समीक्ष्य समायान्तमयोध्याया इव स्वनः ।।
इमाः स्फीतगुणा वर्षाः सुग्रीवः सुखमश्नुते ।
विजितारिः सदारश्च राज्ये महति च स्थितः ।।
अहं तु हृतदारश्च राज्याच्च महतश्च्युतः ।
नदीकूलमिव क्लिन्नमवसीदामि लक्ष्मण ।।
शोकश्च मम विस्तीर्णो वर्षाश्च भृशदुर्गमाः ।
रावणश्च महाञ्छत्रुरपारः प्रतिभाति मे ।।
अयात्रां चैव दृष्ट्वेमां मार्गांश्च भृशदुर्गमान् ।।
प्रणते चैव सुग्रीवे न मया किंचिदीरितम् ।।
अपि चापि परिक्लिष्टं चिराद्दारैः समागतम् ।
आत्मकार्यगरीयस्त्वाद्वक्तुं नेच्छामि वानरम् ।।
स्वयमेव हि विश्रम्य ज्ञात्वा कालमुपागतम् ।
उपकारं च सुग्रीवो वेत्स्यते नात्र संशयः ।।
तस्मात्कालप्रतीक्षोऽहं स्थितोऽस्मि शुभलक्षण ।
सुग्रीवस्य नदीनां च प्रसादमभिकाङ्क्षयन् ।।
उपकारेण वीरो हि प्रतीकारेण युज्यते ।
अकृतज्ञोऽप्रतिकृतो हन्ति सत्त्ववतां मनः ।।

# अशोकवनिकायां सीता

(रा० ५।१५)

स वीक्षमाणस्तत्रस्थो मार्गमाणश्च मैथिलीम् ।
अवेक्षमाणश्च मही सर्वा तामन्ववैक्षत ।।
सतानकलताभिश्च पादपैरुपशोभिताम् ।
दिव्यगन्धरसोपेता सर्वत समलंकृताम् ।।
ता स नन्दनसंकाशा मृगपक्षिभिरावृताम् ।
हर्म्यप्रासादसबाधां कोकिलाकुलनि.स्वनाम् ।।
काञ्चनोत्पलपद्माभिर्वापीभिरुपशोभिताम् ।
बह्वासनकुथोपेता बहुभूमिगृहायुताम् ।।
सर्वर्तुकुसुमै रम्यै फलवद्भिश्च पादपै ।
पुष्पितानामशोकाना श्रिया सूर्योदयप्रभाम् ।
प्रदीप्तामिव तत्रस्थो मारुति समुदैक्षत ।।
निष्पत्रशाखा विहगै क्रियमाणामिवासकृत् ।
विनिष्पतद्भि. शतशश्चित्रै· पुष्पावतसकै ।।
समूलपुष्परचितैरशोकै शोकनाशनै. ।
पुष्पभारातिभारैश्च स्पृशद्भिरिव मेदिनीम् ।।
कर्णिकारै कुसुमितै किशुकैश्च सुपुष्पितै ।
स देश. प्रभया तेषा प्रदीप्त इव सर्वत ।।
पुनागा· सप्तपर्णाश्च चम्पकोद्दालकास्तथा ।
विवृद्धमूला बहव. शोभन्ते स्म सुपुष्पिता. ।।
शातकुम्भनिभा केचित्केचिदग्निशिखप्रभा ।
नीलाञ्जननिभा· केचित्तत्राशोका· सहस्रश ।।
नन्दन विबुधोद्यान चित्र चैत्ररथं यथा ।
अतिवृत्तमिवाचिन्त्यं दिव्य रम्यश्रिया युतम् ।।
द्वितीयमिव चाकाश पुष्पज्योतिर्गणायुतम् ।
पुष्परत्नशतैश्चित्रं पञ्चम सागर यथा ।।

सर्वर्तुपुष्पैर्निचितं पादपैर्मधुगन्धिभिः ।
नानानिनादैरुद्यानं रम्य मृगगणद्विजैः ।।
अनेकगन्धप्रवह पुण्यगन्ध मनोहरम् ।
शैलेन्द्रमिव गन्धाढ्य द्वितीय गन्धमादनम् ।।
अशोकवनिकायां तु तस्यां वानरपुगवः ।
स ददर्शाविदूरस्थं चैत्यप्रासादमूर्जितम् ।।
मध्ये स्तम्भसहस्रेण स्थितं कैलासपाण्डुरम् ।
प्रवालकृतसोपान तप्तकाञ्चनवेदिकम् ।।
मुष्णन्तमिव चक्षूंषि द्योतमानमिव श्रिया ।
निर्मल प्राशुभावत्वादुल्लिखन्तमिवाम्बरम् ।
ततो मलिनसंवीतां राक्षसीभिः समावृताम् ।
उपवासकृशा दीना नि श्वसन्ती पुनः पुनः ।
ददर्श शुक्लपक्षादौ चन्द्ररेखामिवामलाम् ।।
मन्दप्रख्यायमानेन रूपेण रुचिरप्रभाम् ।
पिनद्धां धूमजालेन शिखामिव विभावसोः ।।
पीतेनैकेन संवीता क्लिष्टेनोत्तमवाससा ।
सपङ्कामनलकारां विपद्मामिव पद्मिनीम् ।।
पीडितां दु.खसंतप्ता परिक्षीणा तपस्विनीम् ।
ग्रहेणाङ्गारकेणेव पीडितामिव रोहिणीम् ।।
अश्रुपूर्णमुखी दीनां कृशामनशनेन च ।
शोकध्यानपरां म्लाना नित्यं दु खपरायणाम् ।।
प्रिय जनमपश्यन्ती पश्यन्ती राक्षसीगणम् ।
स्वगणेन मृगी हीनां श्वगणेनावृतामिव ।।
नीलनागाभया वेण्या जघन गतयैकया ।
नीलया नीरदापाये वनराज्या महीमिव ।।
सुखार्हां दु.खसतप्तां व्यसनानामकोविदाम् ।
ता विलोक्य विशालाक्षीमधिकं मलिनां कृशाम् ।
तर्कयामास सीतेति कारणैरुपपादिभिः ।।
ह्रियमाणा तदा तेन रक्षसा कामरूपिणा ।
यथारूपा हि दृष्टा सा तथारूपेयमङ्गना ।।

पूर्णचन्द्रानना सुभ्रू चारुवृत्तपयोधराम् ।
कुर्वती प्रभया देवी सर्वा वितिमिरा दिश ।।
ता नीलकण्ठी बिम्बोष्ठी सुमध्या सुप्रतिष्ठिताम् ।
सीता पद्मपलाशाक्षी मन्मथस्य रतिं यथा ।।
इष्टा सर्वस्य जगत· पूर्णचन्द्रप्रभामिव ।
भूमौ सुतनुमासीना नियतामिव तापसीम् ।
नि.श्वासबहुला भीरुं भुजगेन्द्रवधूमिव ।।
शोकजालेन महता विततेन न राजतीम् ।
संसक्ता धूमजालेन शिखामिव विभावसो: ।।
ता स्मृतीमिव सदिग्धामृद्धि निपतितामिव ।
विहृतामिव च श्रद्धामाशा प्रतिहृतामिव ।।
सोपसर्गां यथा सिद्धि बुद्धि सकलुषामिव ।
अभूतेनापवादेन कीर्तिं निपतितामिव ।।
रामोपरोधव्यथिता रक्षोगणनिपीडिताम् ।
अबला मृगशावाक्षी वीक्षमाणा ततस्तत· ।।
बाष्पाम्बुपरिपूर्णेन कृष्णवक्त्राक्षिपक्ष्मणा ।
वदनेनाप्रसन्नेन नि श्वसन्ती पुन पुन· ।।
मलपङ्कधरा दीना मण्डनार्हाममण्डिताम् ।
प्रभा नक्षत्रराजस्य कालमेघैरिवावृताम् ।।
तस्य सदिदिहे बुद्धिस्तथा सीता निरीक्ष्य च ।
आम्नायानामयोगेन विद्या प्रशिथिलामिव ।।
दु:खेन बुबुधे सीता हनुमाननलकृताम् ।
सस्कारेण यथा हीना वाचमर्थान्तर गताम् ।।
ता समीक्ष्य विशालाक्षी राजपुत्रीमनिन्दिताम् ।
तर्कयामास सीतेति कारणैरुपपादयन् ।।
वैदेह्या यानि चाङ्गेषु तदा रामोऽन्वकीर्तयत् ।
तान्याभरणजालानि गात्रशोभीन्यलक्षयत् ।।
सुकृतौ कर्णवेष्टौ च श्वदष्ट्रौ च सुसस्थितौ ।
मणिविद्रुमचित्राणि हस्तेष्वाभरणानि च ।।
श्यामानि चिरयुक्तत्वात्तथा सस्थानवन्ति च ।

तान्येवैतानि मन्येऽह यानि रामोऽन्वकीर्तयत् ।।
तत्र यान्यवहीनानि तान्यहं नोपलक्षये ।
यान्यस्या नावहीनानि तानीमानि न सशय. ।।
पीत कनकपट्टाभ स्रस्त तद्वसनं शुभम् ।।
उत्तरीय नगासक्त तदा दृष्ट प्लवङ्गमैः ।।
भूषणानि च मुख्यानि दृष्टानि धरणीतले ।।
अनयैवापविद्धानि स्वनवन्ति महान्ति च ।।
इद चिरगृहीतत्वाद्वसनं क्लिष्टवत्तरम् ।
तथाप्यनूनं तद्वर्ण तथा श्रीमद्यथेतरत् ।।
इयं कनकवर्णाङ्गी रामस्य महिषी प्रिया ।
प्रनष्टापि सती यस्य मनसो न प्रणश्यति ।।
इयं सा यत्कृते रामश्चतुर्भिरिह तप्यते ।
कारुण्येनानृशस्येन शोकेन मदनेन च ।।
स्त्री प्रनष्टेति कारुण्यादाश्रितेत्यानृशस्यतः ।
पत्नी नष्टेति शोकेन प्रियेति मदनेन च ।।
तस्या देव्या यथारूपमङ्गप्रत्यङ्गसौष्ठवम् ।
रामस्य च यथारूप तस्येयमसितेक्षणा ।
अस्या देव्या मनस्तस्मिस्तस्य चास्यां प्रतिष्ठितम् ।
तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति ।।
दुष्कर कृतवान्रामो हीनो यदनया प्रभुः ।
धारयत्यात्मनो देहं न शोकेनावसीदति ।।
एवं सीता तथा दृष्ट्वा हृष्टः पवनसभवः ।
जगाम मनसा रामं प्रशशस च त प्रभुम् ।।

# रावणभयकातरा सीता

(रा० ५।१९।२–२१)

ततो दृष्ट्वैव वैदेही रावण राक्षसाधिपम् ।
प्रावेपत वरारोहा प्रवाते कदली यथा ।।
ऊरुभ्यामुदर छाद्य बाहुभ्या च पयोधरौ ।
उपविष्टा विशालाक्षी रुदती वरवर्णिनी ।।
दशग्रीवस्तु वैदेही रक्षिता राक्षसीगणै. ।
ददर्श दीना दु खार्ता नाव सन्नामिवार्णवे ।।
असवृतायामासीना धरण्या सशितव्रताम् ।
छिन्ना प्रपतिता भूमौ शाखामिव वनस्पते· ।।
मलमण्डनदिग्धाङ्गी मण्डनार्हाममण्डनाम् ।
मृणाली पङ्कदिग्धेव विभाति न विभाति च ।।
समीप राजसिहस्य रामस्य विदितात्मन ।
सकल्पहयसयुक्तैर्यान्तीमिव मनोरथै ।।
शुष्यन्ती रुदतीमेका ध्यानशोकपरायणाम् ।
दु खस्यान्तमपश्यन्ती रामा राममनुव्रताम् ।।
चेष्टमानामथाविष्टा पन्नगेन्द्रवधूमिव ।
धूप्यमाना ग्रहेणेव रोहिणी धूमकेतुना ।।
वृत्तशीले कुले जातामाचारवति धार्मिके ।
पुन सस्कारमापन्ना जातामिव च दुष्कुले ।।
सन्नामिव महाकीर्ति श्रद्धामिव विमानिताम् ।
प्रज्ञामिव परिक्षीणामाशां प्रतिहतामिव ।।
आयतीमिव विध्वस्तामाज्ञा प्रतिहतामिव ।
दीप्तामिव दिश काले पूजामपहृतामिव ।।
पौर्णमासीमिव निशा तमोग्रस्तेन्दुमण्डलाम् ।
पद्मिनीमिव विध्वस्ता हतशूरा चमूमिव ।।
प्रभामिव तमोध्वस्तामुपक्षीणामिवापगाम् ।

वेदीमिव परामृष्टां शान्तामग्निशिखामिव ।।
उत्कृष्टपर्णकमलां वित्रासितविहङ्गमाम् ।
हस्तिहस्तपरामृष्टामाकुलामिव पद्मिनीम् ।।
पतिशोकातुरा शुष्कां नदी विस्रावितामिव ।
परया मृजया हीनां कृष्णपक्षे निशामिव ।।
सुकुमारी सुजाताङ्गी रत्नगर्भगृहोचिताम् ।
तप्यमानामिवोष्णेन मृणालीमचिरोद्धृताम् ।।
गृहीता लाडिता स्तम्भे यूथपेन विनाकृताम् ।
निःश्वसन्ती सुदुःखार्ता गजराजवधूमिव ।।
एकया दीर्घया वेण्या शोभमानामयत्नतः ।
नीलया नीरदापाये वनराज्या महीमिव ।।
उपवासेन शोकेन ध्यानेन च भयेन च ।
परिक्षीणां कृशा दीनामल्पाहारां तपोधनाम् ।।
आयाचमाना दुःखार्ता प्राञ्जलि देवतामिव ।
भावेन रघुमुख्यस्य दशग्रीवपराभवम् ।।

# रामरावणयोर्युद्धम्

(रा० ६।१०७।२९-५२)

तौ तथा युध्यमानौ तु समरे रामरावणौ ।
ददृशु सर्वभूतानि विस्मितेनान्तरात्मना ।।
अर्दयन्तौ तु समरे तयोस्तौ स्यन्दनोत्तमौ ।
परस्परमभिक्रुद्धौ परस्परमभिद्रुतौ ।
परस्परवधे युक्तौ घोररूपौ बभूवतु. ।।
मण्डलानि च वीथीश्च गतप्रत्यागतानि च ।
दर्शयन्तौ बहुविधा सूतसारथ्यजा गतिम् ।।
अर्दयन्रावण रामो राघव चापि रावण ।
गतिवेग समापन्नौ प्रतिवेगनिवर्तने ।।
क्षिपतो शरजालानि तयोस्तौ स्यन्दनोत्तमौ ।
चेरतु सयुगमही सासारौ जलदाविव ।।
दर्शयित्वा तदा तौ तु गति बहुविधा रणे ।
परस्परस्याभिमुखौ पुनरेव च तस्थतु ।।
धुर धुरेण रथयोर्वक्त्र वक्त्रेण वाजिनाम् ।
पताकाश्च पताकाभि समीयु. स्थितयोस्तदा ।।
रावणस्य ततो रामो धनुर्मुक्तै. शितै शरै· ।
चतुर्भिश्चतुरो दीप्तान्हयान्प्रत्यपसर्पयत् ।।
स क्रोधवशमापन्नो हयानामपसर्पणे ।
मुमोच निशितान्बाणान्राघवाय दशानन ।।
सोऽतिविद्धो बलवता दशग्रीवेण राघव ।
जगाम न विकार च न चापि व्यथितोऽभवत् ।।
चिक्षेप च पुनर्बाणान्वज्रसारसमस्वनान् ।
सारथि वज्रहस्तस्य समुद्दिश्य दशानन. ।।
मातलेस्तु महावेगा शरीरे पतिता शरा ।
न सूक्ष्ममपि समोह व्यथा वा प्रददुर्युधि ।।

तया धर्षणया क्रुद्धो मातलेर्न तथात्मन ।
चकार शरजालेन राघवो विमुख रिपुम् ।।
विंशतिं त्रिंशति षष्टि शतशोऽथ सहस्रश ।
मुमोच राघवो वीर. सायकान्स्यन्दने रिपो. ।।
रावणोऽपि तत क्रुद्धो रथस्थो राक्षसेश्वर ।
गदामुसलवर्षेण राम प्रत्यर्दयद्रणे ।।
तत्प्रयुक्त पुनर्युद्ध तुमुल रोमहर्षणम् ।
गदानां मुसलाना च परिघाणा च नि स्वनै ।
शराणां पुङ्खवातैश्च क्षुभिता सप्तसागरा ।।
क्षुब्धाना सागराणा च पातालतलवासिन. ।
व्यथिता दानवा सर्वे पन्नगाश्च सहस्रश ।।
चकम्पे मेदिनी कृत्स्ना सशैलवनकानना ।
भास्करो निष्प्रभश्चासीन्न ववौ चापि मारुत. ।।
ततो देवा सगन्धर्वा. सिद्धाश्च परमर्षय ।
चिन्तामापेदिरे सर्वे सकिनरमहोरगा ।।
स्वस्ति गोब्राह्मणेभ्यस्तु लोकास्तिष्ठन्तु शाश्वता. ।
जयता राघव. संख्ये रावण राक्षसेश्वरम् ।।
एव जपन्तोऽपश्यस्ते देवा सर्षिगणास्तदा ।
रामरावणयोर्युद्ध सुघोर रोमहर्षणम् ।।
गन्धर्वाप्सरसा सङ्घा दृष्ट्वा युद्धमनुपमम् ।
गगन गगनाकार सागर सागरोपमम् ।।
रामरावणयोर्युद्ध रामरावणयोरिव ।
एवं ब्रुवन्तो ददृशुस्तद्युद्ध रामरावणम् ।।

# जनकाश्वमेधे याज्ञवल्क्यप्रतिष्ठा

(वायुपु० ६०)

जनकस्याश्वमेधे तु महानासीत्समागम ।
ऋषीणा तु सहस्राणि तत्राजग्मुरनेकश. ।
राजर्षेर्जनकस्याथ त यज्ञ हि दिदृक्षव. ।।
आगतान्ब्राह्मणान्दृष्ट्वा जिज्ञासास्याभवत्तत ।
को न्वेषा ब्राह्मण· श्रेष्ठ· कथ मे निश्चयो भवेत् ।
इति निश्चित्य मनसा बुद्धि चक्रे जनाधिपः ।।
गवा सहस्रमादाय सुवर्णमधिक तत ।
ग्रामान्रत्नानि दासाश्च मुनीन्प्राह नराधिप. ।
सर्वानह प्रपन्नोऽस्मि शिरसा श्रेष्ठभागिन. ।।
यदेतदाहृत वित्त यो व श्रेष्ठतमो भवेत् ।
तस्मै तदुपनीत हि विद्यावित्त द्विजोत्तमा ।।
जनकस्य वच श्रुत्वा मुनयस्ते श्रुतिक्षमा ।
दृष्ट्वा धन महासार धनवृद्धया जिघृक्षव ।
आह्वयाचक्रुरन्योन्य वेदज्ञानमदोल्बणा. ।।
मनसा गतचित्तास्ते ममेद धनमित्युत ।
ममैवैतन्नवेत्यन्यो ब्रूहि कि वा विकल्प्यते ।
इत्येव धनदोषेण वादाश्चक्रुरनेकश ।।
तथान्यस्तत्र वै विद्वान्ब्रह्मवाहसुत. कवि ।
याज्ञवल्क्यो महातेजास्तपस्वी ब्रह्मवित्तम. ।।
ब्रह्मणोऽङ्गात्समुत्पन्नो वाक्य प्रोवाच सुस्वरम् ।
शिष्यं ब्रह्मविदा श्रेष्ठो धनमेतद्गृहाण भो ।।
नयस्व च गृह वत्स ममैतन्नात्र सशय. ।
सर्ववेदेष्वह वक्ता नान्य कश्चित्तु मत्सम. ।
यो वा न प्रीयते विप्र स मे ह्वयतु मा चिरम् ।।
ततो ब्रह्मार्णव क्षुब्ध समुद्र इव सप्लवे ।

तानुवाच तत: स्वस्थो याज्ञवल्क्यो हसन्निव ।।
क्रोधं मा कार्षुर्विद्वासो भवन्त: सत्यवादिन. ।
वदामहे यथायुक्त जिज्ञासन्त परस्परम् ।।
ततोऽभ्युपागमस्तेषा वादा जग्मुरनेकश. ।
सहस्रधा शुभैरर्थै सूक्ष्मदर्शनसभवै ।।
लोके वेदे तथाध्यात्मे विद्यास्थानैरलकृता' ।
शापोत्तमगुणैर्युक्ता नृपौघपरिवर्जना' ।
वादा समभवस्तत्र धनहेतोर्महात्मनाम् ।।
ऋषयस्त्वेकत सर्वे याज्ञवल्क्यस्तथैकत' ।
सर्वे ते मुनयस्तेन याज्ञवल्क्येन धीमता ।
एकैकशस्तत पृष्टा नैवोत्तरमथाब्रुवन् ।।
तान्विजित्य मुनीन्सर्वान्ब्रह्मराशिर्महाद्युति. ।
शाकल्यमिति होवाच वादकर्तारमञ्जसा ।।
शाकल्य वद वक्तव्यं कि ध्यायन्नवतिष्ठसे ।
पूर्णस्त्व जडमानेन वाताध्मातो यथा दृति ।।
एव स धर्षितस्तेन रोषात्ताम्रास्यलोचन. ।
प्रोवाच याज्ञवल्क्य त परुप मुनिसनिधौ ।।
त्वमस्मास्तृणवत्कृत्वा तथैवेमान्द्विजोत्तमान् ।
विद्याधन महासारं स्वयग्राहं जिघृक्षसि ।।
शाकल्येनैवमुक्त स याज्ञवल्क्य' समब्रवीत् ।
ब्रह्मिष्ठाना वल विद्धि विद्यातत्त्वार्थदर्शनम् ।।
कामश्चार्थेन सबद्धस्तेनार्थं कामयामहे ।
कामप्रश्नधना विप्रा कामप्रश्नान्वदामहे ।।
पणश्चैपोऽस्य राजर्षेस्तस्मान्नीत धनं मया ।
एतच्छ्रुत्वा वचस्तस्य शाकल्य. क्रोधमूर्च्छित ।
याज्ञवल्क्यमथोवाच कामप्रश्नार्थवद्वच' ।।
ब्रूहीदानीं मयोद्दिष्टान्कामप्रश्नान्यथार्थत: ।
तत' समभवद्वादस्तयोर्ब्रह्मविदोर्महान् ।।
साग्रं प्रश्नसहस्र तु शाकल्यस्तमचूचुदत् ।
याज्ञवल्क्योऽब्रवीत्सर्वानृषीणां शृण्वतां तदा ।।

शाकल्ये चापि निर्वादे याज्ञवल्क्यस्तमब्रवीत् ।
प्रश्नमेक ममापि त्व वद शाकल्य कामिकम् ।
शाप. पणोऽस्य वादस्य अब्रुवन्मृत्युमाव्रजेत् ।।
अथ सन्नोदित प्रश्न याज्ञवल्क्येन धीमता ।।
शाकल्यस्तमविज्ञाय सद्यो मृत्युमवाप्नुयात् ।।
एव मृत· स शाकल्य प्रश्नव्याख्यानपीडित ॥
एव वादश्च सुमहानासीत्तेषा धनार्थिनाम् ।
ऋषीणा मुनिभि. सार्ध याज्ञवल्क्यस्य चैव हि ।।
सर्वे पृष्टास्तु सप्रश्नाञ्शतशोऽथ सहस्रश. ।
व्याख्याय वै मुने तेषा प्रश्नसार महागति ।।
याज्ञवल्क्यो धन गृह्य यशो विख्याप्य चात्मनः ।
जगाम वै गृह स्वस्थ शिष्यै परिवृतो वशी ।।

# आदिराजपृथुचरितम्

(वायुपु० ६२)

सूत उवाच।

अङ्गात्सुनीथापत्य वै वेनमेकं व्यजायत।
अपचारेण वेनस्य प्रकोपः सुमहानभूत्॥
प्रजार्थमृषयस्तस्य ममन्थुर्दक्षिण करम्।
वेनस्य पाणौ मथिते सवभूव महान्नृपः।
वैन्यो नाम महीपालो यः पृथु. परिकीर्तितः॥
स धन्वी कवची जातस्तेजसा प्रज्वलन्निव।
पृथुर्वैन्य. सर्वलोकान्रक्ष क्षत्रपूर्वज.॥
राजसूयाभिषिक्तानामाद्यः स वसुधाधिपः।
तस्य स्तवार्थमुत्पन्नौ निपुणौ सूतमागधौ॥
तेनेयं गौर्महाराज्ञा दुग्धा सस्यानि धीमता।
प्रजानां वृत्तिकामानां देवैर्ऋषिगणैः सह॥
पितृभिर्दानवैश्चैव गन्धर्वैरप्सरोगणै.।
सर्वैः पुण्यजनैश्चैव वीरुद्भि· पर्वतैस्तथा॥
तेषु तेषु तु पात्रेषु दुह्यमाना वसुधरा।
प्रादाद्यथेप्सित क्षीर तेन लोकास्त्वधारयत्॥

ऋषय ऊचु.।

विस्तरेण पृथोर्जन्म कीर्तयस्व महामते।
यथा महात्मना दुग्धा पूर्व तेन वसुधरा॥
यथा देवैश्च नागैश्च यथा ब्रह्मर्षिभिः सह।
यथा यक्षै· सगन्धर्वैरप्सरोभिर्यथा पुरा।
यथा यथा च तैर्दुग्धा विधिना येन येन च॥
तेषां पात्रविशेषाश्च दोग्धार क्षीरमेव च।
तथा वत्सविशेषाश्च तन्न. प्रब्रूहि पृच्छताम्॥

यस्मिश्च कारणे पाणिर्वेनस्य मथित. पुरा ।
क्रुद्धैर्महर्षिभि पूर्वं तत्सर्वं कथयस्व न. ।।

सूत उवाच ।

वर्णयिष्यामि वो विप्रा पृथोर्वैन्यस्य सभवम् ।
एकाग्रा प्रयताश्चैव शुश्रूषध्व द्विजोत्तमा ।।
नाशुचेर्नापि पापाय नाशिष्यायाहिताय च ।
वर्णयेयमिम पुण्य नाव्रताय कथचन ।।
स्वर्ग्यं यशस्यमायुष्य पुण्य वेदैश्च समितम् ।
रहस्यमृषिभि प्रोक्त शृणुयाद्योऽनसूयक ।।
यश्चेम श्रावयेन्मर्त्य. पृथोर्वैन्यस्य सभवम् ।
ब्राह्मणेभ्यो नमस्कृत्य न स शोचेत्कृताकृतम् ।।
गोप्ता धर्मस्य राजासौ बभूवात्रिसम प्रभु ।
अत्रिवशसमुत्पन्नो ह्यङ्गो नाम प्रजापतिः ।
यस्य पुत्रोऽभवद्वेनो नात्यर्थं धार्मिकस्तथा ।।
जातो मृत्युसुताया वै सुनीथाया प्रजापति ।
स मातामहदोषेण वेन कालात्मजात्मज. ।।
स धर्मं पृष्ठत कृत्वा कामाल्लोभे व्यवर्तत ।
स्थापन स्थापयामास धर्मापेत स पार्थिव ।।
वेदशास्त्राण्यतिक्रम्य ह्यधर्मे निरतोऽभवत् ।
नि स्वाध्यायवषट्कारा. प्रजास्तस्मिन्प्रशासति ।
आसन्न च पपु सोम हुत यज्ञेषु देवता ।।
न यष्टव्य न होतव्यमिति तस्य प्रजापते ।
आसीत्प्रतिज्ञा क्रूरेय विनाशे प्रत्युपस्थिते ।।
अहमिज्यश्च पूज्यश्च सर्वयज्ञे द्विजातिभि ।
मयि यज्ञो विधातव्यो मयि होतव्यमित्यपि ।।
तमतिक्रान्तमर्यादमाददानमसाप्रतम् ।
ऊचुर्महर्षय सर्वे मरीचिप्रमुखास्तथा ।।
वय दीक्षा प्रवेक्ष्याम सवत्सरशतान्बहून् ।
माधर्म वेन कार्षीस्त्व नैष धर्म सनातन ।

निधने च प्रसूतोऽसि प्रजापतिरसंशयः ।।
पालयिष्ये प्रजाश्चेति त्वया पूर्वं प्रतिश्रुतम् ।
तास्तथा वादिनः सर्वान्ब्रह्मर्षीनब्रवीत्तदा ।।
स प्रहस्य तु दुर्बुद्धिरिदं वचनकोविदः ।
स्रष्टा धर्मस्य कश्चान्यः श्रोतव्यं कस्य वै मया ।।
वीर्यश्रुततपःसत्यैर्मया वा कः समो भुवि ।
महात्मानमनून मां यूयं जानीत तत्त्वतः ।।
प्रभवः सर्वलोकानां धर्माणां च विशेषतः ।
इच्छन्दहेयं पृथिवीं प्लावयेयं जलेन वा ।
सृजेयं वा ग्रसेयं वा नात्र कार्या विचारणा ।।
यदा न शक्यते स्तम्भान्मानाच्च भृशमोहितः ।
अनुनेतुं नृपो वेनस्ततः क्रुद्धा महर्षयः ।।
निगृह्य तं महाबाहुं विस्फुरन्तं यथानलम् ।
ततोऽस्य वामहस्तं ते ममन्थुर्भृशकोपिताः ।।
तस्मात्प्रमथ्यमानाद्वै जज्ञे पूर्वमभिश्रुतः ।
ह्रस्वोऽतिमात्रं पुरुषः कृष्णश्चापि तथा द्विजाः ।।
स भीतः प्राञ्जलिश्चैव स्थितवान्व्याकुलेन्द्रियः ।
तमार्तं विह्वलं दृष्ट्वा निषीदेत्यब्रुवन्किल ।।
निषादवंशकर्तासौ बभूवानन्तविक्रमः ।
धीवरानसृजत्सोऽपि वेनकल्मषसंभवान् ।।
ये चान्ये विन्ध्यनिलयास्तुम्बुरास्तुवराः खसाः ।
अधर्मरुचयश्चापि संभूता वेनकल्मषात् ।।
पुनर्महर्षयस्तस्य पाणिं वेनस्य दक्षिणम् ।
अरणीमिव संरम्भान्ममन्थुर्जातमन्यवः ।।
पृथुस्तस्मात्समुत्पन्नः कराग्न्फालनतेजसः ।
पृथोः करतलाच्चापि यस्माज्जातः पृथुस्ततः ।
दीप्यमानः स्ववपुषा साक्षादग्निरिवोज्ज्वलन् ।।
आद्यमाजगवं नाम धनुर्गृह्य महारवम् ।
शरांश्च बिभ्रद्रक्षार्थं कवचं च महाप्रभम् ।।
तस्मिञ्जातेऽथ भूतानि सम्प्रहृष्टानि सर्वशः ।

समुत्पन्ने महाराज्ञि वेनश्च त्रिदिव गत. ।।
समुत्पन्नेन राजर्षि स सत्पुत्रेण धीमता ।
त्रात स पुरुषव्याघ्र पुन्नाम्नो नरकात्तदा ।।
त नद्यश्च समुद्राश्च रत्नान्यादाय सर्वश ।
अभिषेकाय तोय च सर्वं एवोपतस्थिरे ।।
पितामहश्च भगवानङ्गिरोभि सहामरै ।।
स्थावराणि च भूतानि जङ्गमानि च सर्वश ।।
समागम्य तदा वैन्यमभ्यषिञ्चन्नराधिपम् ।
महता राजराज्येन महाराज महाद्युतिम् ।।
सोऽभिषिक्तो महाराजो देवैरङ्गिरस सुतै. ।
आदिराजो महाराज पृथुर्वैन्य प्रतापवान् ।।
पित्रापरञ्जितास्तस्य प्रजास्तेनानुरञ्जिता ।
ततो राजेति नामास्य अनुरागादजायत ।।
आपस्तस्तम्भिरे चास्य समुद्रमभियास्यत ।
पर्वताश्च विशीर्यन्ते ध्वजभङ्गश्च नाभवत् ।।
अकृष्टपच्या पृथिवी सिध्यन्त्यन्नानि चिन्तया ।
सर्वकामदुधा गाव पुटके पुटके मधु ।।
एतस्मिन्नेव काले च यज्ञे पैतामहे शुभे ।
सूत सुत्या समुत्पन्न सौत्येऽहनि महामति ।
तस्मिन्नेव महायज्ञे जज्ञे प्राज्ञोऽथ मागध ।।
ऐन्द्रण हविषा चापि हवि पृक्त बृहस्पते ।
जुहावेन्द्राय देवेन तत सूतो व्यजायत ।।
प्रमादस्तत्र सजज्ञे प्रायश्चित्त च कर्मसु ।
शिष्यहव्येन यत्पृक्तमभिभूत गुरोर्हवि ।
अधरोत्तरचारेण जज्ञे तद्वर्णवैकृतम् ।।
यच्च क्षत्रात्समभवद् ब्राह्मण्य हीनयोनित ।
सूत. पूर्वेण साधर्म्यात्तुल्यधर्म प्रकीर्तित ।।
मध्यमो ह्येष सूतस्य धर्म. क्षत्रोपजीवनम् ।
रथनागाश्वचरित जघन्य च चिकित्सितम् ।।
पृथो स्तवार्थ तौ तत्र समाहूतौ सुरर्षिभि ।

तावूचुर्मुनयः सर्वे स्तूयतामेष पार्थिवः ।
कर्मैतदनुरूपं वा पात्रं स्तोत्रस्य चाप्ययम् ॥
तावूचतुस्तदा सर्वांस्तानृषीन्सूतमागधौ ।
आवां देवानृषींश्चैव प्रीणयावः स्वकर्मभिः ॥
न चास्य कर्म वै विद्मो न तथा लक्षणं यशः ।
स्तोत्रं येनास्य कुर्यावो राज्ञस्तेजस्विनो द्विजाः ॥
ऋषिभिस्तौ नियुक्तौ तु भविष्यैः स्तूयतामिति ।
दानधर्मरतो नित्यं सत्यवाक्सजितेन्द्रियः ।
ज्ञानशीलो वदान्यस्तु संग्रामेष्वपराजितः ॥
यानि कर्माणि कृतवान्पृथुश्चापि महाबलः ।
तानि शीलेन बद्धानि स्तुवद्भिः सूतमागधैः ॥
ततः स्तवान्ते सुप्रीतः पृथुः प्रादात्प्रजेश्वरः ।
अनूपदेशं सूताय मगधान्मागधाय च ॥
तदा वै पृथिवीपालाः स्तूयन्ते सूतमागधैः ।
आशीर्वादैः प्रबोध्यन्ते सूतमागधबन्दिभिः ॥
तं दृष्ट्वा परमप्रीताः प्रजा ऊचुर्महर्षयः ।
एष वो वृत्तिदो वैन्यो भवत्विति नराधिपः ॥
ततो वैन्यं महाभागं प्रजाः समभिदुद्रुवुः ।
त्वं नो वृत्तिं विधत्स्वेति महर्षेर्वचनात्तदा ॥
सोऽभिद्रुतः प्रजाभिस्तु प्रजाहितचिकीर्षया ।
धनुर्गृहीत्वा बाणांश्च वसुधामार्दयद्बली ॥
अस्यार्दनभयत्रस्ता गौर्भूत्वा प्राद्रवन्मही ।
तां पृथुर्धनुरादाय द्रवन्तीमन्वधावत ॥
सा लोकान्ब्रह्मलोकादीन्गत्वा वैन्यभयात्तदा ।
ददर्श चाग्रतो वैन्यं कार्मुकोद्यतधारिणम् ॥
ज्वलद्भिर्विशिखैर्बाणैर्दीप्ततेजसमच्युतम् ।
महायोगं महात्मानं दुर्धर्षममरैरपि ॥
अलभन्ती तदा त्राणं वैन्यमेवान्वपद्यत ।
कृताञ्जलिपुटा देवी पूज्या लोकैस्त्रिभिः सदा ॥
उवाच वैन्यं नाधर्मं स्त्रीवधे परिपश्यसि ।

कथ धारयिता चासि प्रजा राजन्मया विना ।।
मयि लोकाः स्थिता राजन्मयेद धार्यते जगत् ।
मदृते च विनश्येयु: प्रजा पार्थिवसत्तम ।।
न मामर्हसि वै हन्तु श्रेयश्चेत्त्व चिकीर्षसि ।
प्रजाना पृथिवीपाल शृणु चेद वचो मम ।।
उपायत समारब्धा सर्वे सिध्यन्त्युपक्रमा ।
हत्वापि मा न शक्तस्त्व प्रजाना पालने नृप ।।
अन्नभूता भविष्यामि जहि कोप महाद्युते ।
अवध्याश्च स्त्रिय प्राहुस्तिर्यग्योनिगतेष्वपि ।
मत्वैव पृथिवीपाल धर्म न त्यक्तुमर्हसि ।।
एवं बहुविध वाक्य श्रुत्वा राजा महामना: ।
क्रोध निगृह्य धर्मात्मा वसुधामिदमब्रवीत् ।।
एकस्यार्थाय यो हन्यादात्मनो वा परस्य वा ।
एक प्राण बहून्वापि काम तस्यास्ति पातकम् ।।
यस्मिस्तु निहते भद्रे लभन्ते बहव सुखम् ।
तस्मिन्हते शुभे नास्ति पातक चोपपातकम् ।।
सोऽह प्रजानिमित्त त्वा वधिष्यामि वसुधरे ।
यदि मे वचन नाद्य करिष्यसि जगद्धितम् ।।
त्वा निहत्याद्य बाणेन मच्छासनपराङमुखीम् ।
आत्मान प्रथयित्वेह धारयिष्याम्यह प्रजा: ।।
सा त्व वचनमासाद्य मम धर्मभृता वरे ।
सजीवय प्रजा नित्यं शक्ता ह्यसि न सशय ।।
दुहितृत्व च मे गच्छ एवमेत महद्वरम् ।
नियच्छे त्वा तु धर्मार्थं प्रयुक्त घोरदर्शने ।।
प्रत्युवाच ततो वैन्यमेवमुक्ता सती मही ।
एवमेतदह राजन्विधास्यामि न सशय ।।
वत्स तु मम त यच्छ क्षरेय येन वत्सला ।
समा च कुरु सर्वत्र मा त्व धर्मभृता वर ।
यथा विष्यन्दमान च क्षीर सर्वत्र भावयेत् ।।
तत उत्सारयामास शिलाजालानि सर्वश ।

धनुष्कोटचा ततो वैन्यस्तेन शैला विवर्धिता. ।।
मन्वन्तरेष्वतीतेषु विषमासीद्वसुधरा ।
स्वभावेनाभवंस्तस्या समानि विषमाणि च ।।
न हि पूर्वविसर्गे वै विषमे पृथिवीतले ।
प्रविभाग. पुराणा वा ग्रामाणा वापि विद्यते ।।
न सस्यानि न गोरक्षा न कृषिर्न वणिक्पथ. ।
चाक्षुषस्यान्तरे पूर्वमेतदासीत्पुरा किल ।
वैवस्वतेऽन्तरे तस्मिन्सर्वस्यैतस्य सभवः ।।
समत्व यत्र यत्रासीद्भूयस्तस्मिस्तदेव हि ।
तत्र तत्र प्रजास्ता वै निवसन्ति स्म सर्वदा ।।
आहारफलमूल तु प्रजानामभवत्किल ।
कृच्छ्रेणैव तदा तासामित्येवमनशुश्रुम ।
वैन्यात्प्रभृति लोकेऽस्मिन्सर्वस्यैतस्य सभव ।।
कृच्छ्रेण महता सोऽपि प्रनष्टास्वोषधीषु वै ।
स कल्पयित्वा वत्स तु चाक्षुष मनुमीश्वरः ।
पृथुर्दुदोह सस्यानि स्वतले पृथिवी तत ।।
सस्यानि तेन दुग्धानि वैन्येन तु वसुधरा ।
मनु च चाक्षुष कृत्वा वत्स पात्रे च भूमये ।
तेनान्नेन तदा ता वै वर्तयन्ते प्रजा· सदा ।।
ऋषिभि स्तूयते वापि पुनर्दुग्धा वसुंधरा ।
वत्सः सोमस्त्वभूत्तेषा दोग्धा चापि बृहस्पति. ।।
पात्रमासीत्तु छन्दासि गायत्र्यादीनि सर्वश· ।
क्षीरमासीत्तदा तेषा तपो ब्रह्म च शाश्वतम् ।।
पुन स्तुत्वा देवगणै· पुरदरपुरोगमैः ।
सौवर्ण पात्रमादाय अमृत दुदुहे तदा ।
तेनैव वर्तयन्ते च देवा इन्द्रपुरोगमाः ।।
नागैश्च स्तूयते दुग्ध्वा विष क्षीर तदा मही ।
तेषा च वासुकिर्दोग्धा काद्रवेया महौजस. ।।
नागाना वै द्विजश्रेष्ठ सर्पाणा चैव सर्वश. ।
तेनैव वर्तयन्त्युग्रा महाकाया महात्मना. ।

तदाहारास्तदाचारास्तद्वीर्यास्तु तदाश्रया ।।
आमपात्रे पुनर्दुग्धा त्वन्तर्धानमियं मही ।
वत्सं वैश्रवणं कृत्वा यज्ञैः पुण्यजनैस्तथा ।।
दोग्धा च जतुनाभस्तु पिता मणिवरस्य सः ।
यक्षात्मजो महातेजा वशी स सुमहाबलः ।
तेन ते वर्तयन्तीति परमर्षिरुवाच ह ।।
राक्षसैश्च पिशाचैश्च पुनर्दुग्धा वसुंधरा ।
ब्रह्मोपेतस्तु दोग्धा वै तेषामासीत्कुबेरकः ।।
रक्षः सुमाली बलवान्क्षीरं रुधिरमेव च ।
कपालपात्रे निर्दुग्धा अन्तर्धानं च राक्षसैः ।
तेन क्षीरेण रक्षांसि वर्तयन्तीह सर्वशः ।।
राजतं पात्रमादाय पितृभिः स्तूयते मही ।
स्वधामृतं च पितॄणामासीद्दोग्धार्यमा तथा ।
यमो वत्सोऽभवत्तेषां मासो तृप्तिस्तु सर्वदा ।।
पद्मपात्रे पुनर्दुग्धा गन्धर्वैरप्सरोगणैः ।
वत्सं चित्ररथं कृत्वा शुचीन्गान्धास्तथैव च ।।
तेषां विश्वावसुस्त्वासीद्दोग्धा पुत्रो मुनेः शुचिः ।
गन्धर्वराजोऽतिबलो महात्मा सूर्यसंनिभः ।।
शैलैश्च स्तूयते दुग्धा पुनर्देवी वसुंधरा ।
तत्रौषधीर्मूर्तिमती रत्नानि विविधानि च ।।
वत्सस्तु हिमवांस्तेषां मेरुर्दोग्धा महागिरिः ।
पात्रं तु शैलमेवासीत्तेन शैलः प्रतिष्ठितः ।।
स्तूयते वृक्षवीरुद्भिः पुनर्दुग्धा वसुंधरा ।
पलाशपात्रमादाय दुग्धं छिन्नप्ररोहणम् ।।
कामधुक्पुष्पितः शैलः पक्षो वत्सो यशस्विनी ।
सर्वकामदुघा दोग्ध्री पृथिवी भूतभाविनी ।।
सैषा धात्री विधात्री च धारणी च वसुंधरा ।
दुग्धा हितार्थं लोकानां पृथुना इति नः श्रुतम् ।
चराचरस्य लोकस्य प्रतिष्ठा योनिरेव च ।।

# देवासुरसंग्रामे शुक्रबृहस्पतिचरितम्

(वायुपु० ९७–९८)

सूत उवाच।

दैवासुर यथा वृत्त ब्रुवतस्तन्निबोधत।
हिरण्यकशिपुर्दैत्यस्त्रैलोक्यं प्राक्प्रशासति॥
वलिनाधिष्ठितं राष्ट्रं पुनर्लोकत्रये क्रमात्।
सख्यमासीत्पर तेषां देवानामसुरैः सह॥
युगं वै दशसंकीर्णमासीदव्याहत जगत्।
निदेशस्थायिनश्चैव तयोर्देवासुराभवन्॥
वलवान्वै विवादोऽयं सप्रवृत्त. सुदारुणः।
देवासुराणां च तदा घोरक्षयकरो महान्॥
तेषा दायनिमित्त वै संग्रामा बहवोऽभवन्।
वराहेऽस्मिन्दश द्वौ च पण्डामर्कान्तिगाः स्मृताः॥
नामतस्तु समासेन शृणुध्वं तान्विवक्षतः।
प्रथमो नारसिंहस्तु द्वितीयश्चापि वामनः॥
तृतीय स तु वाराहश्चतुर्थोऽमृतमन्थनः।
संग्रामः पञ्चमश्चैव सुघोरस्तारकामयः॥
षष्ठो ह्याडीवकस्तेषा सप्तमस्त्रैपुर. स्मृतः।
अन्धकारोऽष्टमस्तेषां ध्वजश्च नवमः स्मृतः॥
वार्तश्च दशमो ज्ञेयस्ततो हालाहल स्मृत·।
स्मृतो द्वादशमस्तेषा घोरकोलाहलोऽपरः॥
हिरण्यकशिपुर्दैत्यो नरसिंहेन सूदितः।
वामनेन बलिर्बद्धस्त्रैलोक्याक्रमणे कृते॥
हिरण्याक्षो हतो द्वन्द्वे प्रतिवादे तु दैवतै।
महाबलो महासत्त्व. सग्रामेष्वपराजित॥
दंष्ट्राया तु वराहेण समुद्रात्क्ष्मा यदा कृता।
प्रह्लादो निर्जितो युद्धे इन्द्रेणामृतमन्थने॥

विरोचनस्तु प्राह्लादिर्नित्यमिन्द्रवधोद्यत॰ ।
इन्द्रेणैव स विक्रम्य निहतस्तारकामये ॥
भवादवध्यता प्राप्य विशेषास्त्रादिभिस्तु य ।
सग्रामे निहत॰ षष्ठे शक्राविष्टेन विष्णुना ॥
अशक्नुवन्तो देवेषु पुर गोप्तु त्रिदैवतम् ।
निहता दानवा सर्वे त्रिपुरस्त्र्यम्बकेण तु ॥
अष्टमे त्वसुराश्चैव राक्षसाश्चान्धकारका ।
जितदेवमनुष्यैस्तु पितृभिश्चैव सगतान् ॥
सवृत्तान्दानवाश्चैव सगतान्कृत्स्नशश्च तान् ।
तथा विष्णुसहायेन महेन्द्रेण निबर्हिता. ॥
हतो ध्वजो महेन्द्रेण मायाच्छन्नश्च योधयन् ।
ध्वजे लक्ष्य समाविश्य विप्रचित्तिर्महाभुज ॥
दैत्याश्च दानवाश्चैव सहतान्कृत्स्नशश्च तान् ।
रजि॰ कोलाहले सर्वान्देवै परिवृतोऽजयत् ॥
यज्ञामृतेन विजितौ षण्डामर्कौ तु दैवतै. ।
एते देवा. पुरा वृत्ता: सग्रामा द्वादशैव तु ॥
देवासुरक्षयकरा. प्रजानामशिवाय च ।
हिरण्यकशिपू राजा वर्षाणामर्बुद बभौ ॥
तथा शतसहस्राणि ह्यधिकानि द्विसप्तति॰ ।
अशीतिं च सहस्राणि त्रैलोक्यस्येश्वरोऽभवत् ॥
पर्याये तस्य राजानु बलिर्वर्षार्बुद पुन. ।
षष्टिश्चैव सहस्राणि त्रिंशच्च नियुतानि च ॥
बले राज्याधिकारस्तु यावत्काल बभूव ह ।
प्रह्लादेन गृहीतोऽभूत्तावत्काल तदासुरै ॥
इन्द्रास्त्रयस्ते विख्याता असुराणा महौजस ।
दैत्यसस्थमिद सर्वमासीद्दशयुग किल ॥
असपत्न तत सर्व राष्ट्र दशयुग पुरा ।
त्रैलोक्यमव्ययमिद महेन्द्रेण तु पाल्यते ॥
प्रह्लादस्य ततश्चादस्त्रैलोक्य कालपर्ययात् ।
पर्यायेण च सप्राप्ते त्रैलोक्ये पाकशासन ॥

ततोऽसुरान्परित्यज्य यज्ञे देवा उपागमन् ।
यज्ञे देवानथ गते काव्यं ते ह्यसुराब्रुवन् ।।
हृत नो मिषता राष्ट्र त्यक्त्वा यज्ञं पुनर्गता ।
स्थातु न शक्नुमो ह्यद्य प्रविशामो रसातलम् ।।
एवमुक्तोऽब्रवीदेतान्विषण्ण. सान्त्वयन्गिरा ।
मा भैष्ट धारयिष्यामि तेजसा स्वेन चासुरा· ।।
वृष्टिरोषधयश्चैव रसा वसु च यद्द्वयम् ।
कृत्स्ना मयि च तिष्ठन्तु पादस्तेषा सुरेषु वै ।
युष्मदर्थ प्रदास्यामि तत्सर्वं धार्यते मया ।।
ततो देवासुरान्दृष्ट्वा धृतान्काव्येन धीमता ।
अमन्त्रयस्तदा ते वै सविग्ना विजिगीषया ।।
एष काव्य इदं सर्व व्यावर्तयति नो बलात् ।
साधु गच्छामहे तूर्ण क्षीणानाप्याययस्व तान् ।
प्रसह्य हत्वा शिष्टान्वै पाताल प्रापयामहे ।।
ततो देवा. सुसरब्धा दानवानभिसृत्य वै ।
जघ्नुस्तैर्वध्यमानास्ते काव्यमेवाभिदुद्रुवु· ।।
तत काव्यस्तु तान्दृष्ट्वा तूर्णं देवैरभिद्रुतान् ।
समरेऽस्त्रक्षतार्तास्तान्देवेभ्यस्तान्दिते. सुतान् ।।
काव्यो दृष्ट्वा स्थितान्देवांस्तत्र देवोऽभ्यचिन्तयत् ।
तानुवाच ततो ध्यात्वा पूर्ववृत्तमनुस्मरन् ।।
त्रैलोक्यं विजितं सर्व वामनेन त्रिभि क्रमै. ।
बलिर्बद्धो हतो जम्भो निहतश्च विरोचन. ।।
महार्हेषु द्वादशसु सग्रामेषु सुरैर्हता· ।
तैस्तैरुपायैर्भूयिष्ठा निहता ये प्रधानत. ।।
किंचिच्छिष्टास्तु वै यूय युद्धेष्वन्त्येषु वै स्वयम् ।
नीतिं वो हि विधास्यामि काल: कश्चित्प्रतीक्ष्यताम् ।।
यास्याम्यहं महादेवं मन्त्रार्थं विजयाय व: ।
अग्निमाप्याययेद्धोता मन्त्रैरेव बृहस्पतिः ।।
ततो यास्याम्यहं देवं मन्त्रार्थं नीललोहितम् ।
युष्मानत्प्रहीष्यामि पुन· पश्चादिहागत. ।।

यूय तपश्चरध्व वै सवृता वल्कलैर्वने ।
न वै देवा वधिष्यन्ति यावदागमन मम ।।
अप्रतीपास्ततो मन्त्रान्देवात्प्राप्य महेश्वरात् ।
योत्स्यामहे पुनर्देवास्तत प्राप्स्यथ वै जयम् ।।
ततस्ते कृतसवादा देवानूचुस्ततोऽसुरा ।
न्यस्तवादा वय सर्वे लोकान्यूय क्रमन्तु वै ।।
वय तपश्चरिष्याम सवृता वल्कलैर्वने ।
प्रह्लादस्य वच श्रुत्वा सत्यव्याहरण तु तत् ।।
ततो देवा निवृत्ता वै विज्वरा मुदिताश्च ह ।
न्यस्तशस्त्रेषु दैत्येषु स्वान्वै जग्मुर्यथागतान् ।।
ततस्तानब्रवीत्काव्य कचित्कालमुपास्यताम् ।
निरुत्सुकैस्तपोयुक्तै काल कार्यार्थसाधकै ।
पितुर्ममाश्रमस्था वै सर्वे देवा सवासवा ।।
स सदिश्यासुरान्काव्यो महादेव प्रपद्य च ।
प्रणम्यैनमुवाचाथ जगत्प्रभवमीश्वरम् ।।
मन्त्रानिच्छाम्यह देव ये न सन्ति बृहस्पतौ ।
पराभवाय देवानामसुरेष्वभयावहान् ।।
एवमुक्तोऽब्रवीद्देवो मन्त्रानिच्छसि वै द्विज ।
व्रत चर मयोद्दिष्ट ब्रह्मचारी समाहित ।।
पूर्ण वर्षसहस्र वै कुण्डधूममवाक्छिरा ।
यदि पास्यसि भद्र ते मत्तो मन्त्रमवाप्स्यसि ।।
तथोक्तो देवदेवेन स शुक्रस्तु महातपा ।
पादौ सस्पृश्य देवस्य बाढमित्यभ्यभाषत ।।
व्रत चराम्यह शेष यथोद्दिष्टोऽस्मि वै प्रभो ।
ततो नियुक्तो देवेन कुण्डधारोऽस्य धूमकृत् ।।
असुराणा हितार्थाय तस्मिञ्शुक्रे गते तदा ।
मन्त्रार्थ तत्र वसति ब्रह्मचर्य महेश्वरे ।।
तद्बुद्ध्वा नीतिपूर्व तु राज्यं न्यस्त तदासुरै ।
तस्मिश्छिद्रे तदामर्षाद्देवास्तान्समभिद्रवन् ।
निशितात्तायुधा सर्वे बृहस्पतिपुरोगमा ।।

दृष्ट्वासुरगणा देवान्प्रगृहीतायुधान्पुन. ।
उत्पेतु सहसा सर्वे सत्रस्तास्ते ततोऽभवन् ।।
न्यस्तशस्त्रे जये दत्त आचार्ये व्रतमास्थिते ।
संत्यज्य समय देवास्ते सपत्नजिघांसव. ।।
अनाचार्यास्तु भद्र वो विश्वस्तास्तपसि स्थिताः ।
चीरवल्काजिनधरा निष्क्रिया निष्परिग्रहा. ।।
रणे विजेतु देवान्वै न शक्ष्याम कथचन ।
अगुद्धेन प्रपद्याम शरण काव्यमातरम् ।।
ज्ञापयाम. कृत्स्नमिद यावदागमनं गुरो ।
विनिवृत्ते ततः काव्ये योत्स्यामो युधि तान्सुरान् ।।
एवमुक्त्वासुरान्योग्यं शरण काव्यमातरम् ।
प्रापद्यन्त ततो भीतास्तदा चैव तदाभयम् ।।
दत्तं तेषां तु भीताना दैत्यानामभयार्थिनाम् ।
न भेतव्य न भेतव्यं भयं त्यजत दानवा. ।।
मत्सनिधौ वर्तता वो न भीर्भवितुमर्हति ।
भयाच्चाप्यभिपन्नास्तान्दृष्ट्वा देवासुरांस्तदा ।।
अभिजघ्नुः प्रसह्यैतानविचार्य वलावलम् ।
तास्त्रस्तान्वध्यमानाश्च देवैर्दृष्ट्वासुरास्तदा ।।
देवी क्रुद्धाब्रवीदेनाननिन्द्रत्वं करोम्यहम् ।
संस्तभ्य शीघ्र संरम्भादिन्द्रं साभ्यचरत्ततः ।।
ततः सस्तम्भित दृष्ट्वा शक्र देवास्तु यूपवत् ।
व्यद्रवन्त ततो भीता दृष्ट्वा शक्र वशीकृतम् ।।
गतेषु सुरसंघेषु विष्णुरिन्द्रमभाषत ।
मा त्व प्रविश भद्रं ते नेष्यामि त्वा सुरेश्वर ।।
एवमुक्तस्ततो विष्णु प्रविवेश पुरंदरः ।
विष्णुना रक्षितं दृष्ट्वा देवी क्रुद्धा वचोऽवदत् ।।
एषा त्वा विष्णुना सार्धं दहामि मघवान्निव ।
मिषता सर्वभूतानां दृश्यता मे तपोवलम् ।।
तयाभिभूतौ तौ देवाविन्द्राविष्णू जजल्पतुः ।
कथ मुच्येव सहितौ विष्णुरिन्द्रमभाषत ।।

इन्द्रोऽब्रवीज्जहीह्येना यावन्नौ न दहेद्विभो ।
विशेषेणाभिभूतोऽहमतस्त्वं जहि मा चिरम् ।।
तत. समीक्ष्य ता विष्णु स्त्रीवध कर्तुमास्थित· ।
अभिध्याय ततश्चक्रमापन्न सत्वर प्रभुः ।।
तस्या सत्वरमाणाया शीघ्रकारी सुरारिहा ।
स्त्रिया विष्णुस्ततो देव्या क्रूर बुद्ध्वा चिकीर्षितम् ।
क्रुद्धस्तदस्त्रमाविध्य शिरश्चिच्छेद माधव ।।
तं दृष्ट्वा स्त्रीवधं घोर चुकोप भृगुरीश्वर ।
ततोऽभिशप्तो भृगुणा विष्णुर्भार्यावधे तदा ।।
यस्मात्ते जानता धर्मानवध्या स्त्री निषूदिता ।
तस्मात्त्व सप्तकृत्वो वै मानुषेषु प्रवत्स्यसि ।।
ततस्तेनाभिशापेन नष्टे धर्मे पुन पुन ।
लोके सर्वहितार्थाय जायते मानुषेष्विह ।।
अनुव्याहृत्य विष्णु स तदादाय शिर स्वयम् ।
समानीय ततः काये अपो गृह्येदमब्रवीत् ।।
एष त्वां विष्णुना सत्ये हता सजीवयाम्यहम् ।
यदि कृत्स्नो मया धर्मश्चरितो ज्ञायतेऽपि वा ।
तेन सत्येन जीवस्य यदि सत्य ब्रवीम्यहम् ।।
सत्याभिव्याहृता तस्य देवी सजीविता तदा ।
तदा ता प्रोक्ष्य शीताभिरद्भिर्जीवेति सोऽब्रवीत् ।।
ततस्ता सर्वभूतानि दृष्ट्वा सुप्तोत्थितामिव ।
साधु साध्वित्यदृश्याना वाचस्ता सस्वनुर्दिश ।।
दृष्ट्वा संजीवितामेव देवी ता भृगुणा तदा ।
मिषता सर्वभूताना तदद्भुतमिवाभवत् ।।
असभ्रान्तेन भृगुणा पत्नी सजीविता तत ।
दृष्ट्वा शक्रो न लेभेऽथ शर्म काव्यभयात्तत. ।।
प्रजागरे ततश्चेन्द्रो जयन्तीमात्मन सुताम् ।
प्रोवाच मतिमान्वाक्य स्वा कन्यां पाकशासन. ।।
एष काव्यो ह्यनिन्द्राय चरते दारुण तप ।
तेनाह व्याकुल पुत्रि कृतो धृतिमता दृढम् ।।

गच्छ सभावयस्वैन श्रमापनयनैः शुभैः ।
तैस्तैर्मनोऽनुकूलैश्च ह्युपचारैरतन्द्रिता ॥
देवी सा हीन्द्रदुहिता जयन्ती शुभचारिणी ।
युक्तध्यान च शाम्यन्त दुर्बल धृतिमास्थितम् ॥
पित्रा यथोक्त काव्य सा काव्ये कृतवती तदा ।
गीर्भिश्चैवानुकूलाभि स्तुवती वल्गुभाषिणी ॥
गात्रसवाहनै काले सेवमाना सुखावहैः ।
शुश्रूषन्त्यनुकूला च उवास बहुला समा ॥
पूर्णे धूम्रव्रते चापि घोरे वर्षसहस्रिके ।
वरेण च्छन्दयामास काव्य प्रीतो भवस्तदा ॥
एव ब्रुवस्त्वयैकेन चीर्ण नान्येन केनचित् ।
तस्मात्त्व तपसा बुद्धया श्रुतेन च बलेन च ॥
तेजसा चापि विबुधान्सर्वानभिभविष्यसि ।
यच्च किचिन्मम ब्रह्मन्विद्यते भृगुनन्दन ॥
साङ्ग च सरहस्य च यज्ञोपनिषदा तथा ।
प्रतिभास्यति ते सर्व तच्चाद्यन्त न कस्यचित् ।
सर्वाभिभावी तेन त्व द्विजश्रेष्ठो भविष्यसि ॥
एव दत्त्वा वरास्तस्मै भार्गवाय पुनः पुनः ।
अजेयत्व धनेशत्वमवध्यत्व च वै ददौ ॥
काव्यस्य गात्रं सस्पृश्य हस्तेन प्रीतिमान्भव ।
निकाम दर्शन दत्त्वा तत्रैवान्तरधीयत ॥
तत सोऽन्तर्हिते तस्मिन्देवेशानुचरे तदा ।
तिष्ठन्ती प्राञ्जलिर्भूत्वा जयन्तीमिदमब्रवीत् ॥
कान्य त्व सुभगे का वा दुःखिते मयि दुःखिता ।
महता तपसा युक्तं किमर्थं मा जुगोपसि ॥
अनया सततं भक्त्या प्रश्रयेण दमेन च ।
स्नेहेन चैव सुश्रोणि प्रीतोऽस्मि वरवर्णिनि ॥
किमिच्छसि वरारोहे कस्ते काम समृध्यताम् ।
तं ते संपूरयाम्यद्य यद्यपि स्यात्सुदुर्लभम् ॥
एवमुक्ताब्रवीदेनं तपसा ज्ञातुमर्हसि ।

चिकीर्षितं मे ब्रह्मिष्ठ त्व हि वेत्थ यथातथम् ।।
एवमुक्तोऽब्रवीदेना दृष्ट्वा दिव्येन चक्षुषा ।
माहेन्द्री त्वं वरारोहे मद्धितार्थमिहागता ।।
मया सह त्व सुश्रोणि दश वर्षाणि भामिनि ।
अदृश्यं सर्वभूतैस्तु संप्रयोगमिहेच्छसि ।।
देवेन्द्रानलवर्णाभे वरारोहे सुलोचने ।
इम वृणीष्व काम ते मत्तो वै वल्गुभाषिणि ।।
एव भवतु गच्छामो गृहान्वै मत्तकाशिनि ।
तत स्वगृहमागम्य जयन्त्या सहित॰ प्रभु ।।
स तया सवसेद्देव्या दश वर्षाणि भागश ।
अदृश्य॰ सर्वभूताना मायया सवृतस्तदा ।।
कृतार्थमागत दृष्ट्वा काव्य सर्वे दिते सुता ।
अभिजग्मुर्गृह तस्य मुदितास्ते दिदृक्षवः ।।
गता यदा न पश्यन्तो जयन्त्या सवृत गुरुम् ।
दाक्षिण्य तस्य तद्बुद्ध्वा प्रतिजग्मुर्यथागतम् ।।
बृहस्पतिस्तु सरुद्ध ज्ञात्वा काव्य चकार ह ।
पित्रर्थे दश वर्षाणि जयन्त्या हितकाम्यया ।।
बुद्ध्वा तदन्तर सोऽथ दैत्यानामिव चोदित ।
काव्यस्य रूपमास्थाय सोऽसुरान्समभाषत ।।
तत समागतान्दृष्ट्वा बृहस्पतिरुवाच तान् ।
स्वागत मम याज्याना सप्राप्तोऽस्मि हिताय च ।।
अह वोऽध्यापयिष्यामि प्राप्ता विद्या मया हि सा ।
ततस्ते हृष्टमनसो विद्यार्थमुपपेदिरे ।।
पूर्वं काव्यस्तदा तस्मिन्समये दशवार्षिके ।
ययौ च समकाल स सद्योत्पन्नमतिस्तदा ।।
समयान्ते देवयानी सद्योजाता सुता तदा ।
बुद्धि चक्रे ततश्चापि याज्याना प्रत्यवेक्षणे ।।

शुक्र उवाच ।

देवि गच्छामहे द्रष्टुं तव याज्याञ्शुचिस्मिते ।
विभ्रान्तप्रेक्षिते साध्वि त्रिवर्णायतलोचने ॥
एवमुक्ताब्रवीद्देवी भज भक्तान्महाव्रत ।
एष ब्रह्मन्सतां धर्मो न धर्मं लोपयामि ते ॥

सूत उवाच ।

ततो गत्वासुरान्दृष्ट्वा देवाचार्येण धीमता ।
वञ्चितान्काव्यरूपेण वेधसासुरमब्रवीत् ॥
काव्य मा तात जानीध्वमेष ह्याङ्गिरसो भुवि ।
वञ्चिता बत यूयं वै मयि शक्ते तु दानवाः ॥
श्रुत्वा तथा ब्रुवाणं तं संभ्रान्ता दितिजास्ततः ।
प्रेक्षन्ते स्म ह्युभौ तत्र स्थिता खिन्नाः शुचिस्मिताः ॥
सप्रमूढाः स्थिताः सर्वे प्रापद्यन्त न किंचन ।
ततस्तेषु प्रमूढेषु काव्यस्तान्पुनरब्रवीत् ॥
आचार्यो वो ह्यहं काव्यो देवाचार्योऽयमङ्गिराः ।
अनुगच्छत मा सर्वे त्यजतैनं बृहस्पतिम् ॥
एवमुक्तासुराः सर्वे तावुभौ समवेक्ष्य च ।
तदासुरा विशेषं तु न व्यजानंस्तयोर्द्वयोः ॥
बृहस्पतिरुवाचैतानसंभ्रान्तोऽयमङ्गिराः ।
काव्योऽहं वो गुरुर्दैत्या मद्रूपोऽयं बृहस्पतिः ॥
स मोहयति रूपेण मामकेनैष वोऽसुराः ।
श्रुत्वा तस्य ततस्ते वै संमन्त्र्यार्थं वचोऽब्रवीत् ॥
अयं नो दश वर्षाणि सततं शास्ति वै प्रभुः ।
एष वै गुरुरस्माकमन्तरेप्सुरयं द्विजः ॥
ततस्ते दानवाः सर्वे प्रणिपत्याभिवाद्य च ।
वचनं जगृहुस्तस्य चिराभ्यासेन मोहिताः ॥
ऊचुस्तमसुराः सर्वे क्रुद्धाः संरक्तलोचनाः ।
अयं गुरुर्हितोऽस्माकं गच्छ त्वं नासि नो गुरुः ॥

भार्गवोऽङ्गिरसो वाय भवत्वेषैव नो गुरु· ।
स्थिता वय निदेशोऽस्य गच्छ त्व साधु मा चिरम् ।।
एवमुक्त्वासुरा सर्वे प्रापद्यन्त बृहस्पतिम् ।
यदा न प्रतिपद्यन्ते तेनोक्त तन्महद्धितम् ।।
चुकोप भार्गवस्तेषामवलेपेन वै तदा ।
बोधितापि मया यस्मान्न मा भजत दानवा· ।।
तस्मात्प्रनष्टसज्ञा वै पराभवं गमिष्यथ ।
इति व्याहृत्य तान्काव्यो जगामाथ यथागतम् ।।
ज्ञात्वाभिशस्तानसुरान्काव्येन तु बृहस्पति· ।
कृतार्थ स तदा हृष्ट स्वरूप प्रत्यपद्यत ।
बुद्ध्वासुरास्तदा भ्रष्टान्कृतार्थोऽन्तरधीयत ।।
तत प्रनष्टे तस्मिस्ते विभ्रान्ता दानवास्तदा ।
अहो धिग्वञ्चितास्तेन परस्परमथाब्रुवन् ।।
पृष्ठतो विमुखाश्चैव ताडिता वेधसा वयम् ।
दग्धाश्चैवोपयोगाच्च स्वे स्वे चार्थेषु मायया ।।
ततोऽसुरा परित्रस्ता देवेभ्यस्त्वरिता ययु ।
प्रह्लादमग्रत कृत्वा काव्यस्यानुगम पुन ।।
तत· काव्यं समासाद्य अभितस्थुरवाङ्मुखा ।
तानागतान्पुनर्दृष्ट्वा काव्यो याज्यानुवाच ह ।।
मयापि बोधिता काले यतो मा नाभिनन्दथ ।
ततस्तेनावलेपेन गता यूय पराभवम् ।।
प्रह्लादस्तमथोवाच मान त्वं त्यज भार्गव ।
स्वान्याज्यान्भजमानाश्च भक्ताश्चैव विशेषत: ।।
त्वया पृष्टा वय तेन देवाचार्येण मोहिता· ।
भक्तानर्हसि नस्त्रातु ज्ञात्वा दीर्घेण चक्षुषा ।।
यदि नस्त्व न कुरुषे प्रसाद भृगुनन्दन ।
अपध्यातास्त्वया ह्यद्य प्रवेक्ष्यामो रसातलम् ।।

सूत उवाच ।

ज्ञात्वा काव्यो यथातत्त्व कारुण्येनानुकम्पया ।
एव शुक्रोऽनुनीतः स तत· कोप न्ययच्छत ॥
उवाचेद न भेतव्य न गन्तव्य रसातलम् ।
अवश्यभावी ह्यर्थोऽयं प्राप्तो वो मयि जाग्रति ॥
न शक्यमन्यथाकर्तुमदृष्ट बलवत्तरम् ।
सज्ञा प्रनष्टा या वोऽद्य काम तां प्रतिलप्स्यथ ॥
प्राप्त· पर्यायकालो व इति ब्रह्माभ्यभाषत ।
मत्प्रसादाच्च युष्माभिर्भुक्तं त्रैलोक्यमूर्जितम् ॥
युगाख्या दश सपूर्णा देवानाक्रम्य मूर्धनि ।
तावन्तमेव कालं वै ब्रह्मा राज्यमभाषत ॥
सावर्णिके पुनस्तुभ्य राज्यं किल भविष्यति ।
लोकानामीश्वरो भावी पौत्रस्तव पुनर्बलि. ॥
एवं किलमह प्रोक्त पौत्रस्ते ब्रह्मणा स्वयम् ।
तथा हृतेषु लोकेषु तपोऽस्य न किलाभवत् ॥
यस्मात्प्रवृत्तयश्चास्य न कामानभिसधिताः ।
तस्मादजेन प्रीतेन दत्तं सावर्णिकेऽन्तरे ॥
देवराज्यं बलेर्भाव्यमिति मामीश्वरोऽब्रवीत् ।
तस्माददृश्यो भूताना कालाकाङ्क्षी स तिष्ठति ॥
प्रीतेन चामरत्व वै दत्त तुभ्य स्वयभुवा ।
तस्मान्निरुत्सुकस्त्व वै पर्याय सह माकुलः ॥
न च शक्यं मया तुभ्यं पुरस्ताद्वै विसर्पितुम् ।
ब्रह्मणा प्रतिषिद्धोऽस्मि भविष्यं जानता प्रभो ॥
इमौ च शिष्यौ द्वौ मह्य तुल्यावेतौ बृहस्पते ।
दैवतै सह संरब्धान्सर्वान्वो धारयिष्यतः ॥
एवमुक्तास्तु दैतेया. काव्येनाक्लिष्टकर्मणा ।
ततस्ताभ्या ययु सार्धं प्रह्लादप्रमुखास्तदा ॥
अवश्यभावमर्थं त श्रुत्वा शुक्राच्च दानवा. ।
सकामभग्नमानास्ते जयं काव्येन भाषितम् ॥
दंशिता सायुधा· सर्वे ततो देवान्समाह्वयन् ।

अथ देवासुरान्दृष्ट्वा सग्रामे समुपस्थितान् ।।
तत. सवृत्तसंनाहा देवास्तान्समयोधयन् ।
दैवासुरे ततस्तस्मिन्वर्तमाने शत समा ।
अजयन्नसुरा देवान्भग्ना देवा अमन्त्रयन् ।।

देवा ऊचु ।

षण्डामर्कप्रभाव न जानीमस्त्वसुरैर्वयम् ।
तस्माद्यज्ञ समुद्दिश्य कार्य चात्महित च यत् ।।
तज्ज्ञानापहृतावेतौ कृत्वा जेष्यामहेऽसुरान् ।
अथोपामन्त्रयन्देवा षण्डामर्कौ तु तावुभौ ।।
यज्ञे समाह्वयिष्यामस्त्यजतमसुरान्द्विजौ ।
ग्रह त वा ग्रहीष्यामो ह्यनुजित्य तु दानवान् ।।
एव तत्यजतुस्तौ तु षण्डामर्कौ तदासुरान् ।
ततो देवा जय प्राप्ता दानवाश्च पराभवन् ।।

# मदालसायाः पुत्रोल्लापनम्

(मार्क० पु० २५)

मदालसायाः संजज्ञे पुत्रः प्रथमजस्ततः ।
तस्य चक्रे पिता नाम विक्रान्त इति धीमतः ॥
तुतुषुस्तेन वै भृत्या जहास च मदालसा ।
सा वै मदालसा पुत्र वालमुत्तानशायिनम् ।
उल्लापनच्छलेनाह रुदमानमविस्वरम् ॥
शुद्धोऽसि रे तात न तेऽस्ति नाम
कृतं हि ते कल्पनयाधुनैव ।
पञ्चात्मक देहमिदं तवैत-
न्नैवास्य त्वं रोदिपि कस्य हेतोः ॥
न वा भवान्रोदिति वै स्वजन्मा
शब्दोऽयमासाद्य महीशसूनुम् ।
विकल्प्यमाना विविधा गुणास्ते-
ऽगुणाश्च भौताः सकलेन्द्रियेषु ॥
भूतानि भूतैः परिदुर्वलानि
वृद्धिं समायान्ति यथेह पुसः ।
अन्नाम्बुदानादिभिरेव कस्य
न तेऽस्ति वृद्धिर्न च तेऽस्ति हानिः ॥
त्वं कञ्चुके शीर्यमाणे निजेऽस्मिं-
स्तस्मिंश्च देहे मूढता मा व्रजेथाः ।
शुभाशुभैः कर्मभिर्देहमेत-
न्मदादिमूढैः कञ्चुकस्तेऽपि नद्धः ॥
तातेति किंचित्तनयेति किंचि-
दम्बेति किंचिद्दयितेति किंचित् ।
ममेति किंचिन्न ममेति किंचि-
त्त्वं भूतसंघं बहु मानयेथाः ॥

दु.खानि दु खोपशमाय भोगा-
न्सुखाय जानाति विमूढचेता ।
तान्येव दु खानि पुन सुखानि
जानात्यविद्वान्सुविमूढचेता ॥
हासोऽस्थिसदर्शनमक्षियुग्म-
मत्युज्ज्वल तर्जनमङ्गनाया. ।
कुचादि पीन पिशित घन त-
त्स्थान रतेः कि नरक न योषित् ॥
यानं क्षितौ यानगत च देह
देहेऽपि चान्य· पुरुषो निविष्ट· ।
ममत्वबुद्धिर्न तथा यथा स्वे
देहेऽतिमात्रं बत मूढतैषा ॥

# देवीस्तवः

(मार्क० पु० ८५)

ऋषिरुवाच ।

पुरा शुम्भनिशुम्भाभ्यामसुराभ्या शचीपतेः ।
त्रैलोक्य यज्ञभागाश्च हृता मदबलाश्रयात् ।।
तावेव सूर्यता तद्वदधिकार तथैन्दवम् ।
कौबेरमथ याम्य च चक्राते वरुणस्य च ।।
तावेव पवनर्द्धिं च चक्रतुर्वह्निकर्म च ।
ततो देवा विनिर्धूता भ्रष्टराज्याः पराजिताः ।।
हृताधिकारास्त्रिदशास्ताभ्या सर्वे निराकृता. ।
महासुराभ्या ता देवी सस्मरन्त्यपराजिताम् ।।
तयास्माक वरो दत्तो यथापत्सु स्मृताखिलाः ।
भवता नाशयिष्यामि तत्क्षणात्परमापद ।।
इति कृत्वा मति देवा हिमवन्तं नगेश्वरम् ।
जग्मुस्तत्र ततो देवी विष्णुमाया प्रतुष्टुवुः ।।

देवा ऊचु· ।

नमो देव्यै महादेव्यै शिवायै सततं नमः ।
नम प्रकृत्यै भद्रायै नियता प्रणता स्म ताम् ।।
रौद्रायै नमो नित्यायै गौर्यै धात्र्यै नमो नम. ।
ज्योत्स्नायै चेन्दुरूपिण्यै सुखायै सतत नम. ।।
कल्याण्यै प्रणता वृद्ध्यै सिद्ध्यै कुर्मो नमो नम ।
नैर्ऋत्यै भूभृता लक्ष्म्यै शर्वाण्यै ते नमो नम. ।।
दुर्गायै दुर्गपारायै सारायै सर्वकारिण्यै ।
ख्यात्यै तथैव कृष्णायै धूम्रायै सतत नम· ।।
अतिसौम्यातिरौद्रायै नतास्तस्यै नमो नम ।
नमो जगत्प्रतिष्ठायै देव्यै कृत्यै नमो नमः ।।

या देवी सर्वभूतेषु विष्णुमायेति शब्दिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु चेतनेत्यभिधीयते ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु बुद्धिरूपेण सस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु निद्रारूपेण सस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु क्षुधारूपेण सस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु छायारूपेण सस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु शक्तिरूपेण सस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु तृष्णारूपेण सस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु क्षान्तिरूपेण सस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु जातिरूपेण सस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु लज्जारूपेण सस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु शान्तिरूपेण सस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु श्रद्धारूपेण सस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु कान्तिरूपेण सस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु लक्ष्मीरूपेण सस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।

या देवी सर्वभूतेषु वृत्तिरूपेण सस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नम. ।।
या देवी सर्वभूतेषु स्मृतिरूपेण सस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नम ।।
या देवी सर्वभूतेषु दयारूपेण सस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नम ।।
या देवी सर्वभूतेपु तुष्टिरूपेण सस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु मातृरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु भ्रान्तिरूपेण सस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नम· ।।
इन्द्रियाणामधिष्ठात्री भूताना चाखिलेषु या ।
भूतेपु सतत तस्यै व्याप्तिदेव्यै नमो नमः ।।
चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जगत् ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नम· ।।
स्तुता सुरै· पूर्वमभीष्टसंश्रया-
त्तथा सुरेन्द्रेण दिनेपु सेविता ।
करोतु सा नः शुभहेतुरीश्वरी
शुभानि भद्राण्यभिहन्तु चापद· ।।
या साम्प्रत चोद्धतदैत्यतापितै-
रस्माभिरीशा च सुरैर्नमस्यते ।
या च स्मृता तत्क्षणमेव हन्ति नः
सर्वापदो भक्तिविनम्रमूर्तिभि· ।।

# शुम्भवधानन्तरं सुरगणकृता देवीस्तुतिः

(मार्कण्डेयपु० ९१)

देवि प्रपन्नार्तिहरे प्रसीद
प्रसीद मातर्जगतोऽखिलस्य ।
प्रसीद विश्वेश्वरि पाहि विश्व
त्वमीश्वरी देवि चराचरस्य ।।
आधारभूता जगतस्त्वमेका
महीस्वरूपेण यत स्थितासि ।
अपा स्वरूपस्थितया त्वयैत-
दाप्याय्यते कृत्स्नमलङ्घ्यवीर्ये ।।
त्व वैष्णवी शक्तिरनन्तवीर्या
विश्वस्य बीज परमासि माया ।
समोहित देवि समस्तमेत-
त्त्व वै प्रसन्ना भुवि मुक्तिहेतु ।।
विद्या. समस्तास्तव देवि भेदा.
स्त्रिय समस्ता सकला जगत्सु ।
त्वयैकया पूरितमम्बयैत-
त्का ते स्तुति स्तव्यपरा परोक्ति ।।
सर्वभूता यदा देवी स्वर्गमुक्तिप्रदायिनी ।
त्व स्तुता स्तुतये का वा भवन्तु परमोक्तय ।।
सर्वस्य बुद्धिरूपेण जनस्य हृदि सस्थिते ।
स्वर्गापवर्गदे देवि नारायणि नमोऽस्तु ते ।।
कलाकाष्ठादिरूपेण परिणामप्रदायिनी ।
विश्वस्योपरतौ शक्ते नारायणि नमोऽस्तु ते ।।
सर्वमङ्गलमङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ।।
सृष्टिस्थितिविनाशाना शक्तिभूते सनातनि ।।
गुणाश्रये गुणमये नारायणि नमोऽस्तु ते ।।

शरणागतदीनार्तपरित्राणपरायणे ।
सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते ॥
हंसयुक्तविमानस्थे ब्रह्माणीरूपधारिणि ।
कौशाम्भःक्षरिके देवि नारायणि नमोऽस्तु ते ॥
त्रिशूलचन्द्राहिधरे महावृषभवाहिनि ।
माहेश्वरीस्वरूपेण नारायणि नमोऽस्तु ते ॥
मयूरकुक्कुटवृते महाशक्तिधरेऽनघे ।
कौमारीरूपसंस्थाने नारायणि नमोऽस्तु ते ॥
शङ्खचक्रगदाशार्ङ्गगृहीतपरमायुधे ।
प्रसीद वैष्णवीरूपे नारायणि नमोऽस्तु ते ॥
गृहीतोग्रमहाचक्रे दंष्ट्रोद्धृतवसुंधरे ।
वराहरूपिणि शिवे नारायणि नमोऽस्तु ते ॥
नृसिंहरूपेणोग्रेण हन्तुं दैत्यान्कृतोद्यमे ।
त्रैलोक्यत्राणसहिते नारायणि नमोऽस्तु ते ॥
किरीटिनि महावज्रे सहस्रनयनोज्ज्वले ।
वृत्रप्राणहरे चैन्द्रि नारायणि नमोऽस्तु ते ॥
शिवदूतीस्वरूपेण हतदैत्यमहाबले ।
घोररूपे महारावे नारायणि नमोऽस्तु ते ॥
दंष्ट्राकरालवदने शिरोमालाविभूषणे ।
चामुण्डे मुण्डमथने नारायणि नमोऽस्तु ते ॥
लक्ष्मि लज्जे महाविद्ये श्रद्धे पुष्टि स्वधे ध्रुवे ।
महारात्रि महाविद्ये नारायणि नमोऽस्तु ते ॥
मेधे सरस्वति वरे भूति बाभ्रवि तामसि ।
नियते त्वं प्रसीदेशे नारायणि नमोऽस्तु ते ॥
सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ॥
एतत्ते वदनं सौम्यं लोचनत्रयभूषितम् ।
पातु नः सर्वभूतेभ्यः कात्यायनि नमोऽस्तु ते ॥
ज्वालाकरालमत्युग्रमशेषासुरसूदनम् ।
त्रिशूलं पातु नो भीतेर्भद्रकालि नमोऽस्तु ते ॥

हिनस्ति दैत्यतेजांसि स्वनेनापूर्य या जगत् ।
सा घण्टा पातु नो देवि पापेभ्यो नः सुतानिव ।।
असुरासृग्वसापङ्कचर्चितस्ते करोज्ज्वलः ।
शुभाय खड्गो भवतु चण्डिके त्वां नता वयम् ।।
रोगानशेषानपहंसि तुष्टा
रुष्टा तु कामान्सकलानभीष्टान् ।
त्वामाश्रितानां न विपन्नराणां
त्वामाश्रिता ह्याश्रयतां प्रयान्ति ।।
एतत्कृतं यत्कदनं त्वयाद्य
धर्मद्विषां देवि महासुराणाम् ।
रूपैरनेकैर्बहुधात्ममूर्तिं
कृत्वाम्बिके तत्प्रकरोति कान्या ।।
विद्यासु शास्त्रेषु विवेकदीपे-
ष्वाद्येषु वाक्येषु च का त्वदन्या ।
ममत्वगर्तेऽतिमहान्धकारे
विभ्रामयत्येतदतीव विश्वम् ।।
रक्षांसि यत्रोग्रविषाश्च नागा
यत्रारयो दस्युबलानि यत्र ।
दावानलो यत्र तथाब्धिमध्ये
तत्र स्थिता त्वं परिपासि विश्वम् ।।
विश्वेश्वरि त्वं परिपासि विश्वं
विश्वात्मिका धारयसीति विश्वम् ।
विश्वेशवन्द्या भवती भवन्ति
विश्वाश्रया ये त्वयि भक्तिनम्राः ।।
देवि प्रसीद परिपालय नोऽरिभीते-
र्नित्यं यथासुरवधादधुनैव सद्यः ।
पापानि सर्वजगतां च शमं नयाशु
उत्पातपाकजनितांश्च महोपसर्गान् ।।
प्रणतानां प्रसीद त्वं देवि विश्वार्तिहारिणि ।
त्रैलोक्यवासिनामीड्ये लोकानां वरदा भव ।।

# भूतिशिष्यकृतमग्निप्रसादनम्

(मार्कण्डेयपु० ९९–१००)

वभूवाङ्गिरस. शिष्यो भूतिर्नाम्नातिकोपनः ।
चण्डशापप्रदोऽल्पेऽर्थे मुनिरागस्यसौम्यवाक् ॥
तस्याश्रमे मातरिश्वा न ववावतिनिष्ठुरम् ।
नातितापं रविश्चक्रे पर्जन्यो नातिकर्दमम् ॥
नातिशीत च शीतांशु परिपूर्णोऽपि रश्मिभि· ।
चकार भीत्या वै तस्य कोपनस्यातितेजस. ॥
ऋतवश्च क्रम त्यक्त्वा वृक्षेष्वाश्रमजन्मसु ।
तस्य पुष्पफल चक्रुराज्ञया सार्वकालिकम् ॥
ऊहुरापश्च छन्देन तस्याश्रमसमीपगाः ।
कमण्डलुगताश्चैव तस्य भीता महात्मनः ॥
नातिक्लेशसहो विप्र सोऽभवत्कोपनो भृशम् ।
अपुत्रश्च महाभाग. स तपस्यकरोन्मनः ॥
पुत्रकामो यताहारः शीतवातानलाहत. ।
तपस्यामि विचिन्त्येति तपस्येव मनो दधे ॥
तस्येन्दुर्नातिशीताय नातितापाय भास्कर ।
अभवन्मातरिश्वा च ववौ नाति महामुने ॥
आपीडचमानो द्वन्द्वैश्च स भूतिर्मुनिसत्तम. ।
अनवाप्याभिलाष न तपस संन्यवर्तत ॥
तस्य भ्राता सुवर्चाभूद्यज्ञे तेनाभिमन्त्रित ।
यियासु· शान्तिनामान शिष्यमाह महामतिम् ॥
प्रशान्तमक्षप्रतिमं विनीतं गुरुकर्मणि ।
सदोद्युक्तं शुभाचारमुदार मुनिसत्तमम् ॥

भूतिरुवाच ।

अहं यज्ञं गमिष्यामि भ्रातुः शान्ते सुवर्चसः ।
तेनाहूतस्त्वया चेह यत्कर्तव्यं शृणुष्व तत् ॥

प्रति जागरण वह्नेस्त्वया कार्यं ममाश्रमे ।
तथा तथा प्रयत्नेन यथाग्निर्न शम व्रजेत् ।।

मार्कण्डेय उवाच ।

इत्याज्ञाप्य तथेत्युक्तो गुरु शिष्येण शान्तिना ।
जगाम यज्ञ त भ्रातुराहूत स यवीयसा ।।
स च शान्तिर्वनाद्यावत्समित्पुष्पफलादिकम् ।
उपानयति भृत्यर्थ गुरोस्तस्य महात्मन ।।
अन्यच्च कुरुते कर्म गुरुभक्तिवशानुग ।
प्रशान्तस्तावदनलो योऽसौ भूतिपरिग्रह ।।
त दृष्ट्वा सोऽनल शान्त शान्तिरत्यन्तदु खित ।
भीतश्च भूतेर्बहुधा चिन्तामाप महामति ।।
कि करोमि कथ वात्र भवितागमन गुरो ।
मयाद्य प्रतिपत्तव्य कि कृते सुकृत भवेत् ।।
प्रशान्ताग्निमिम धिष्ण्य यदि पश्यति मे गुरु ।
ततो मा विषमे ह्यद्य व्यसने सनियोक्ष्यति ।।
यद्यन्यमग्निमत्राहमग्निस्थाने करोमि तत् ।
सर्वं प्रत्यक्षदृग्भस्म सोऽवश्य मा करिष्यति ।।
सोऽह पापो गुरोस्तस्य निमित्त कोपशापयो ।
तथात्मान न शोचामि यथा पाप कृत गुरो ।।
दृष्ट्वा प्रशान्तमनल नून शप्स्यति मा गुरु ।
अथवा पावक क्रुद्धस्तथावीर्यो हि स द्विज ।।
यस्य प्रभावाद्बिभ्यन्तो देवास्तिष्ठन्ति शासने ।
कृतागस स मा युक्त्या कया नाधर्षयिष्यति ।।
बहुधैव विचिन्त्यासौ भीतस्तस्य सदा गुरो ।
ययौ मतिमता श्रेष्ठ शरण जातवेदसम् ।।
स चकार तदा स्तोत्र सप्तार्चेर्यतमानस ।
स चैकचित्तो मेदिन्या न्यस्तजानु कृताञ्जलि ।।

शान्तिरुवाच।

ओं नमः सर्वभूतानां साधनाय महात्मने।
एकद्विपञ्चधिष्ण्याय राजसूये षडात्मने॥
नमः समस्तदेवानां वृत्तिदाय सुवर्चसे।
शुक्ररूपाय जगतामशेषाणां स्थितिप्रद.॥
त्व मुख सर्वदेवाना त्वयात्त भगवन्हवि.।
प्रीणयत्यखिलान्देवास्त्वत्प्राणाः सर्वदेवता.॥
हुत हविस्त्वय्यमलमेघत्वमुपगच्छति।
ततश्च जलरूपेण परिणाममुपैति यत्॥
तेनाखिलौषधीजन्म भवत्यनिलसारथे।
ओषधीभिरशेषाभिः सुख जीवन्ति जन्तवः॥
वितन्वते नरा यज्ञांस्त्वत्सृष्टास्वोषधीषु च।
यज्ञैर्देवास्तथा दैत्यास्तद्वद्रक्षांसि पावक॥
आप्याय्यन्ते च ते यज्ञास्त्वदाधारा हुताशन।
अतः सर्वस्य योनिस्त्व वह्ने सर्वमयस्तथा॥
देवता दानवा यक्षा दैत्या गन्धर्वराक्षसाः।
मानुषाः पशवो वृक्षा मृगपक्षिसरीसृपाः॥
आप्याय्यन्ते त्वया सर्वे संवर्ध्यन्ते च पावक।
त्वत्त एवोद्भव यान्ति त्वय्यन्ते च तथा लयम्॥
अपः सृजसि देव त्व त्वमत्सि पुनरेव ताः।
पच्यमानास्त्वया ताश्च प्राणिना पुष्टिकारणम्॥
देवेषु तेजोरूपेण कान्त्या सिद्धेष्ववस्थित.।
विषरूपेण नागेषु वायुरूप. पतत्रिषु॥
मनुजेषु भवान्क्रोधो मोहः पक्षिमृगादिषु।
अवष्टम्भोऽग्नि तरुषु काठिन्य त्व मही प्रति॥
जले द्रवत्व भगवाञ्जवरूपी तथानिले।
व्यापित्वेन तथैवाग्ने नभस्यात्मा व्यवस्थित.॥
त्वमग्ने सर्वभूतानामन्तश्चरसि पालयन्।
त्वामेकमाहुः कवयस्त्वामाहुस्त्रिविधं पुनः॥

त्वामष्टधा कल्पयित्वा यज्ञमाद्यमकल्पयन् ।
त्वया सृष्टमिद विश्व वदन्ति परमर्षय. ।।
त्वामृते हि जगत्सर्व सद्यो नश्येद्धुताशन ।
तुभ्य कृत्वा द्विजः पूजा स्वकर्मविहिता गतिम् ।
प्रयाति हव्यकव्याद्यै स्वधास्वाहाभ्युदीरणात् ।।
परिणामात्मवीर्या हि प्राणिनाममरार्चित ।
दहन्ति सर्वभूतानि ततो निष्क्रम्य हेतय ।।
जातवेदस्तवैवेय विश्वसृष्टिर्महाद्युते ।
तवैव वैदिक कर्म सर्वभूतात्मक जगत् ।।
नमस्तेऽनल पिङ्गाक्ष नमस्तेऽस्तु हुताशन ।
पावकाद्य नमस्तेऽस्तु नमस्ते हव्यवाहन ।।
त्वमेव भुक्तपीताना पाचनाद्विश्वपाचक ।
सस्याना पाककर्ता त्व पोष्टा त्व जगतस्तथा ।।
त्वमेव मेघस्त्व वायुस्त्व बीज सस्यहेतुकम् ।
पोषाय सर्वभूतानां भूतभव्यभवो ह्यसि ।।
त्व ज्योति सर्वभूतेषु त्वमादित्यो विभावसु ।
त्वमहस्त्व तथा रात्रिरुभे सध्ये तथा भवान् ।।
हिरण्यरेतास्त्व वह्ने हिरण्योद्भवकारणम् ।
हिरण्यगर्भश्च भवान्हिरण्यसदृशप्रभ ।।
त्व मुहूर्त क्षणश्च त्व त्व त्रुटिस्त्व तथा लव. ।
कलाकाष्ठानिमेषादिरूपेणासि जगत्प्रभो ।
त्वमेतदखिल काल परिणामात्मको भवान् ।।
या जिह्वा भवत काली कालनिष्ठाकरी प्रभो ।
तया न पाहि पापेभ्य ऐहिकाच्च महाभयात् ।।
कराली नाम या जिह्वा महाप्रलयकारणम् ।
तया न पाहि पापेभ्य ऐहिकाच्च महाभयात् ।।
मनोजवा च या जिह्वा लघिमागुणलक्षणा ।
तया न पाहि पापेभ्य ऐहिकाच्च महाभयात्।।
करोति काम भूतेभ्यो या ते जिह्वा सुलोहिता ।
तया न पाहि पापेभ्य ऐहिकाच्च महाभयात् ।।

सधूम्रवर्णा या जिह्वा प्राणिना रोगदायिका ।
तया न· पाहि पापेभ्य ऐहिकाच्च महाभ्यात् ।।
स्फुलिङ्गिनी च या जिह्वा यत. सकलपुद्गला· ।
तया नः पाहि पापेभ्य ऐहिकाच्च महाभयात् ।।
या ते विश्वा सदा जिह्वा प्राणिना शर्मदायिनी ।
तया न पाहि पापेभ्य ऐहिकाच्च महाभयात् ।।
पिङ्गाक्ष लोहितग्रीव कृष्णवर्ण हुताशन ।
त्राहि मा सर्वदोषेभ्य. ससारादुद्धरेह माम् ।।
प्रसीद वह्ने सप्तार्चि. कृशानो हव्यवाहन ।
अग्निपावकशुक्रादिनामाष्टभिरुदीरितः ।।
अग्नेऽग्रे सर्वभूताना समुद्भूत विभावसो ।
प्रसीद हव्यवाहाख्य अभिष्टुत मयाव्यय ।।
त्वमक्षयो वह्निरचिन्त्यरूप
समृद्धिमान्दुष्प्रसहोऽतितीव्र· ।
त्वमव्यय भीममशेषलोक
समूर्तको हन्त्यथवातिवीर्य. ।।
त्वमुत्तम सत्त्वमशेषसत्त्व-
हृत्पुण्डरीकस्त्वमनन्तमीड्यम् ।
त्वया तत विश्वमिदं चराचर
हुताशनैको बहुधा त्वमत्र ।।
त्वमक्षय सगिरिवना वसुंधरा
नभः ससोमार्कमहर्दिवाखिलम् ।
महोदधेर्जठरगतश्च वाडवो
भवान्विभूत्या परया करे स्थितः ।।
हुताशनस्त्वमिति सदाभिपूज्यसे
महाक्रतौ नियमपरैर्महर्षिभि· ।
अभिष्टुत पिबसि च सोममध्वरे
वषट्कृतान्यपि च हवींषि भूतये ।।
त्व विप्रै· सततमिहेज्यसे फलार्थं
वेदान्तेष्वथ सकलेषु गीयसे त्वम् ।

तद्धेतोर्यजनपरायणा द्विजेन्द्रा
वेदाङ्गान्यधिगमयन्ति सर्वकाले ।।
त्व ब्रह्मा यजनपरस्तथैव विष्णु-
र्भूतेश. सुरपतिरर्यमा जलेश ।
सूर्येन्दू सकलसुरासुराश्च हव्यै.
सतोष्याभिमतफलान्यथाप्नुवन्ति ।।
अर्चिर्भि परममहोपघातदुष्ट
सस्पृष्टं तव शुचि जायते समस्तम् ।
स्नानाना परममतीव भस्मना स-
त्सध्याया मुनिभिरतीव सेव्यसे तत् ।।
प्रसीद वह्ने शुचिनामधेय
प्रसीद वायो विमलातिदीप्ते ।
प्रसीद मे पावक वैद्युताद्य
प्रसीद हव्याशन पाहि मा त्वम् ।।
यत्ते वह्ने शिव रूप ये च ते सप्त हेतय ।
तै पाहि न स्तुतो देव पिता पुत्रमिवात्मजम् ।।

मार्कण्डेय उवाच ।

एव स्तुतस्ततस्तेन भगवान्हव्यवाहन ।
ज्वालामालावृतस्तत्र तस्यासीदग्रतो मुने ।।
देवो विभावसु. प्रीतस्तोत्रेणानेन वै द्विज ।
त शान्तिमाह प्रणत मेघगम्भीरवागथ ।।

अग्निरुवाच ।

परितुष्टोऽस्मि ते विप्र भक्त्या या ते स्तुति कृता ।
वर ददामि भवते प्रार्थ्यता यत्तवेप्सितम् ।।

शान्तिरुवाच ।

भगवन्कृतकृत्योऽस्मि यत्त्वा पश्यामि रूपिणम् ।
तथापि भक्तिनम्रस्य भवता श्रूयता मम ।।

भ्रातृयज्ञं गतो देव ममाचार्यो निजाश्रमात् ।
आगतश्चाश्रमं धिष्ण्यं त्वत्सनाथ स पश्यतु ॥
ममापराधात्सत्यक्त धिष्ण्य यत्ते विभावसो ।
तत्त्वयाधिष्ठितं सोऽद्य पूर्ववत्पश्यतां द्विजः ॥
तथान्यदपि मे देव प्रसाद कुरुषे यदि ।
पुत्रो विशिष्टो भवतु तदपुत्रस्य मे गुरोः ॥
यथा च मैत्री तनये स करिष्यति मे गुरु. ।
तथा समस्तसत्त्वेषु भवत्वस्य मनो मृदु ॥
पश्यता (यत्कृते? ) स्तोष्यते येन (ऽनेन? ) प्रीति यातोऽसि मेऽव्यय ।
स्तोत्रेण तस्य वरदो भवेथा मत्प्रसादितः ॥

मार्कण्डेय उवाच ।

एतच्छ्रुत्वा वचस्तस्य तमाह द्विजसत्तमम् ।
स्तोत्रेणाराधितो भूयो गुरुभक्त्या च पावकः ॥

अग्निरुवाच ।

गुरोरर्थे यतो ब्रह्मन्याचित ते वरद्वयम् ।
नात्मार्थं तेन मे प्रीतिस्त्वय्यतीव महामुने ॥
भविष्यत्येतदखिलं गुरोर्यत्प्रार्थितं त्वया ।
मैत्री समस्तभूतेषु पुत्रश्चास्य भविष्यति ॥
मन्वन्तराधिप. पुत्रो भौत्यो नाम भविष्यति ।
महाबलो महावीर्यो महाप्राज्ञो गुरुस्तव ॥
अनेन यश्च स्तोत्रेण स्तोष्यते मा समाहितः ।
तस्याभिलषित सर्वं पुण्य चास्य भविष्यति ॥
यज्ञेषु पर्वकालेषु तीर्थेज्याहोमकर्मसु ।
धर्माय पठतामेतन्मम पुष्टिकरं परम् ॥
अहोरात्रकृत पाप श्रुतमेतत्सकृद्द्विज ।
नाशयिष्यत्यसन्दिग्ध मम तुष्टिकरं परम् ॥
अहोरात्रकालदोषादीन्प्रयोग्यैरपि तत्कृतैः (तत्कृतेः? ) ।
ये दोषास्तानिद सद्यः शमयिष्यति मच्छ्रुतम् ॥

पौर्णमास्याममावास्या पर्वस्वन्येषु प्रस्तवः।
ममैष संश्रुतो मर्त्यैर्भविता पापनाशन: ।।

मार्कण्डेय उवाच।

इत्युक्त्वा भगवानग्नि: पश्यतस्तस्य वै मुने।
बभूवादर्शन सद्यो दीपस्थो निर्वृतो यथा ।।
स च शान्तिर्गते वह्नौ परितुष्टेन चेतसा।
हर्षरोमाञ्चिततनु प्रविवेशाश्रम गुरो ।।

# जडभरतोपाख्यानम्

(विष्णुपु० २।१३–१६)

मैत्रेय उवाच।

भरत. स महीपाल· शालग्रामेऽवसत्किल।
योगयुक्त समाधाय वासुदेवे सदा मन ॥
पुण्यदेशप्रभावेन ध्यायतश्च सदा हरिम्।
कथ तु नाभवन्मुक्तिर्यदभूत्स द्विज. पुन. ॥
विप्रत्वे च कृत तेन यद्भूय. सुमहात्मना।
भरतेन मुनिश्रेष्ठ तत्सर्वं वक्तुमर्हसि ॥

पराशर उवाच।

शालग्रामे महाभागो भगवन्न्यस्तमानस.।
स उवास चिर काल मैत्रेय पृथिवीपति ॥
अहिसादिष्वशेषेषु गुणेषु गुणिना वर·।
अवाप परमा काष्ठा मनसश्चापि सयमे ॥
यज्ञेशाच्युत गोविन्द माधवानन्त केशव।
कृष्ण विष्णो हृषीकेशेत्याह राजा स केवलम् ॥
नान्यज्जगाद मैत्रेय किचित्स्वप्नान्तरेऽपि च।
एतत्परं तदर्थं च विना नान्यदचिन्तयत् ॥
समित्पुष्पकुशादान चक्रे देवक्रियाकृते।
नान्यानि चक्रे कर्माणि नि सङ्गो योगतापस. ॥
जगाम सोऽभिषेकार्थमेकदा तु महानदीम्।
सस्नौ तत्र तदा चक्रे स्नानस्यानन्तरक्रिया. ॥
अथाजगाम तत्तीर्थं जलं पातु पिपासिता।
आसन्नप्रसवा ब्रह्मन्नेकैव हरिणी वनात् ॥
तत समभवत्तत्र पीतप्राये जले तया।
सिंहस्य नाद सुमहान्सर्वप्राणिभयंकर. ॥

तत सा सहसा त्रासादाप्लुता निम्नगातटम् ।
अत्युच्चारोहणेनास्या नद्या गर्भ पपात स ॥
तमुह्यमान वेगेन वीचिमालापरिप्लुतम् ।
जग्राह स नृपो गर्भात्पतित मृगपोतकम् ॥
गर्भप्रच्युतिदोषेण प्रोत्तुङ्गाक्रमणेन च ।
मैत्रेय सापि हरिणी पपात च ममार च ॥
हरिणी ता विलोक्याथ विपन्ना नृपतापस. ।
मृगपोत समादाय निजमाश्रममागत ॥
चकारानुदिन चासौ मृगपोतस्य वै नृप ।
पोषण पुष्यमाणश्च स तेन ववृधे मुने ॥
चचाराश्रमपर्यन्त तृणानि गहनेषु स ।
दूर गत्वा च शार्दूलत्रासादभ्याययौ पुन ॥
प्रातर्गत्वातिदूर च सायमायात्यथाश्रमम् ।
पुनश्च भरतस्याभूदाश्रमस्योटजाजिरे ॥
तस्य तस्मिन्मृगे दूरसमीपपरिवर्तिनि ।
आसीच्चेत समायुक्त न ययावन्यतो द्विज ॥
विमुक्तराज्यतनय प्रोज्झिताशेषबान्धव. ।
ममत्व स चकारोच्चैस्तस्मिन्हरिणबालके ॥
कि वृकैर्भक्षितो व्याघ्रै कि सिहेन निपातित ।
चिरायमाणे निष्क्रान्ते तस्यासीदिति मानसम् ॥
एषा वसुमती तस्य खुराग्रक्षतकर्बुरा ।
प्रीतये मम जातोऽसौ क्व ममैणकबालक ॥
विषाणाग्रेण मद्बाहुकण्डूयनपरो हि स ।
क्षेमेणाभ्यागतोऽरण्यादपि मा सुखयिष्यति ॥
एते लूनशिखास्तस्य दशनैरचिरोद्गतै ।
कुशा काशा विराजन्ते वटव सामगा इव ॥
इत्थ चिरगते तस्मिन्स चक्रे मानस मुनि ।
प्रीतिप्रसन्नवदन पार्श्वस्थे चाभवन्मृगे ॥
समाधिभङ्गस्तस्यासीत्तन्मयत्वादृतात्मन ।
सत्यक्तराज्यभोगर्द्धिस्वजनस्यापि भूपते ॥

चपल चपले तस्मिन्दूरगं दूरगामिनि ।
मृगपोतेऽभवच्चित्तं स्थैर्यवत्तस्य भूपतेः ॥
कालेन गच्छता सोऽथ काल चक्रे महीपतिः ।
पितेव सास्र पुत्रेण मृगपोतेन वीक्षित· ॥
मृगमेव तदाद्राक्षीत्त्यजन्प्राणानसावपि ।
तन्मयत्वेन मैत्रेय नान्यत्किंचिदचिन्तयत् ॥
ततश्च तत्कालकृतां भावना प्राप्य तादृशीम् ।
जम्बुमार्गे महारण्ये जातो जातिस्मरो मृगः ॥
जातिस्मरत्वादुद्विग्नः ससारस्य द्विजोत्तम ।
विहाय मातर भूय· शालग्राममुपाययौ ॥
शुष्कैस्तृणैस्तथा पर्णै· स कुर्वन्नात्मपोषणम् ।
मृगत्वहेतुभूतस्य कर्मणो निष्कृति ययौ ॥
तत्र चोत्सृष्टदेहोऽसौ जज्ञे जातिस्मरो द्विजः ।
सदाचारवता शुद्धे योगिनां प्रवरे कुले ॥
सर्वविज्ञानसपन्न· सर्वशास्त्रार्थतत्त्ववित् ।
अपश्यत्स च मैत्रेय आत्मान प्रकृते· परम् ॥
आत्मनोऽधिगतज्ञानो देवादीनि महामुने ।
सर्वभूतान्यभेदेन स ददर्श महामति· ॥
न पपाठ गुरुप्रोक्त कृतोपनयन· श्रुतम् ।
न ददर्श च कर्माणि शास्त्राणि जगृहे न च ॥
उक्तोऽपि बहुश· किंचिज्जडवाक्यमभाषत ।
तदप्यसंस्कारयुत ग्राम्यवाक्योक्तिसश्रितम् ॥
अपध्वस्तवपुः सोऽथ मलिनाम्बरधृग्द्विजः ।
क्लिन्नदन्तान्तरः सर्वै· परिभूतः स नागरैः ॥
सम्मानना परां हानिं योगर्द्धेः कुरुते यतः ।
जनेनावमतो योगी योगसिद्धिं च विन्दति ॥
तस्माच्चरेत वै योगी सतां मार्गमदूषयन् ।
जना यथावमन्येरन्गच्छेयुर्नैव संगतिम् ॥
हिरण्यगर्भवचन विचिन्त्येत्थं महामतिः ।
आत्मान दर्शयामास जडोन्मत्ताकृतिं जने ॥

भुङ्क्ते कुल्माषव्रीह्यादि शाक वन्यफल कणान् ।
यद्यदाप्नोति सुवहु तदत्ते कालसयमम् ।।
पितर्युपरते सोऽथ भ्रातृभ्रातृव्यबान्धवै ।
कारित. क्षेत्रकर्मादि कदन्नाहारपोषित· ।।
स तूक्षपीनावयवो जडकारी च कर्मणि ।
सर्वलोकोपकरण बभूवाहारवेतन ।।
त तादृशमसस्कारविप्राकृतिविचेष्टितम् ।
क्षत्ता सौवीरराजस्य विष्टियोग्यममन्यत ।।
स राजा शिबिकारूढो गन्तु कृतमतिर्द्विज ।
बभूवेक्षुमतीतीरे कपिलर्षेर्वराश्रमम् ।।
श्रेय· किमत्र ससारे दु खप्राये नृणामिति ।
प्रष्टु त मोक्षधर्मज्ञ कपिलाख्य महामुनिम् ।।
उवाह शिबिका तस्य क्षत्तुर्वचनचोदित ।
नृणा विष्टिगृहीतानामन्येषा सोऽपि मध्यग. ।।
गृहीतो विष्टिना विप्र. सर्वज्ञानेकभाजन. ।
जातिस्मरोऽसौ पापस्य क्षयकाम उवाह ताम् ।।
ययौ जडगति. सोऽथ युगमात्रावलोकनम् ।
कुर्वन्मतिमता श्रेष्ठस्तदन्ये त्वरित ययु ।।
विलोक्य नृपति. सोऽपि विषमां शिबिकागतिम् ।
किमेतदित्याह सम गम्यता शिबिकावहा ।।
पुनस्तथैव शिबिका विलोक्य विषमा हि स. ।
नृप. किमेतदित्याह भवद्भिर्गम्यतेऽन्यथा ।।
भूपतेर्वदतस्तस्य श्रुत्वेत्थ बहुशो वच. ।
शिबिकोद्वाहका प्रोचुरय यातीत्यसत्वरम् ।।

राजोवाच ।

कि श्रान्तोऽस्यल्पमध्वान त्वयोढा शिविका मम ।
किमायाससहो न त्व पीवानसि निरीक्ष्यसे ।।

ब्राह्मण उवाच ।

नाह पीवान्न चैवोढा शिनिका भवतो मया ।
न श्रान्तोऽस्मि न चायास सोढव्योऽस्ति महीपते ।।

राजोवाच ।

प्रत्यक्षं दृश्यते पीवानद्यापि शिबिका त्वयि ।
श्रमश्च भारोद्वहने भवत्येव हि देहिनाम् ॥

ब्राह्मण उवाच ।

प्रत्यक्षं भवता भूप यद्दृष्टं मम तद्वद ।
बलवानबलश्चेति वाच्यं पश्चाद्विशेषणम् ॥
त्वयोढा शिबिका चेति त्वय्यद्यापि च सस्थिता ।
मिथ्यैतदत्र तु भवाञ्छृणोतु वचनं मम ॥
भूमौ पादयुगस्यास्था जङ्घे पादद्वये स्थिते ।
ऊरू जङ्घाद्वयावस्थौ तदाधारं तथोदरम् ॥
वक्ष.स्थल तथा बाहू स्कन्धौ चोदरसंस्थितौ ।
स्कन्धाश्रितेयं शिबिका मम भारोऽत्र कि कृत ॥
शिबिकाया स्थितं चेदं वपुस्त्वदुपलक्षितम् ।
तत्र त्वमहमप्यत्र प्रोच्यते चेदमन्यथा ॥
अहं त्व च तथान्ये च भूतैरुह्याम पार्थिव ।
गुणप्रवाहपतितो भूतवर्गोऽपि यात्ययम् ॥
कर्मवश्या गुणाश्चैते सत्त्वाद्याः पृथिवीपते ।
अविद्यासचितं कर्म तच्चाशेषेषु जन्तुषु ॥
आत्मा शुद्धोऽक्षर. शान्तो निर्गुण. प्रकृतेः परः ।
प्रवृद्ध्यपचयौ नास्य एकस्याखिलजन्तुषु ॥
यदा नोपचयस्तस्य न चैवापचयो नृप ।
तदा पीवानसीतीत्थं कया युक्त्या त्वयेरितम् ॥
भूपादजङ्घाकट्यूरुजठरादिषु सस्थिते ।
शिबिकेयं यदा स्कन्धे तदा भार. समस्त्वया ॥
तदान्यैर्जन्तुभिर्भूप शिबिकोत्थो न केवलम् ।
शैलद्रुमगृहोत्थोऽपि पृथिवीसम्भवोऽपि वा ॥
यदा पुनः पृथग्भाव. प्राकृतै॰ कारणैर्नृप ।
सोढव्यस्तु तदायास. कथं वा नृपते मया ॥
यद्द्रव्या शिबिका चेयं तद्द्रव्यो भूतसंग्रहः ।
भवतो मेऽखिलस्यास्य ममत्वेनोपबृंहितः ॥

पराशर उवाच ।

एवमुक्त्वाभवन्मौनी स वहञ्छिबिकां द्विज ।
सोऽपि राजावतीर्योर्व्यां तत्पादौ जगृहे त्वरन् ।।

राजोवाच ।

भो भो विसृज्य शिबिका प्रसाद कुरु मे द्विज ।
कथ्यता को भवानत्र जाल्मरूपधर॰ स्थित: ।।
यो भवान्यन्निमित्त वा यदागमनकारणम् ।
तत्सर्वं कथ्यता विद्वन्मह्य शुश्रूषवे त्वया ।।

ब्राह्मण उवाच ।

श्रूयता कोऽहमित्येतद्वक्तु भूप न शक्यते ।
उपभोगनिमित्त च सर्वत्र गमनक्रिया ।।
सुखदु खोपभोगौ तु तौ देहाद्युपपादकौ ।
धर्माधर्मोद्भवौ भोक्तु जन्तुर्देहादिमृच्छति ।।
सर्वस्यैव हि भूपाल जन्तो. सर्वत्र कारणम् ।
धर्माधर्मौ यत. कस्मात्कारण पृच्छ्यते तत ।।

राजोवाच ।

धर्माधर्मौ न सदेह सर्वकार्येषु कारणम् ।
उपभोगनिमित्त च देहदेशान्तरागम॰ ।।
यत्त्वेतद्भवता प्रोक्त कोऽहमित्येतदात्मन: ।
वक्तु न शक्यते श्रोतु तन्ममेच्छा प्रवर्तते ।।
योऽस्ति सोऽहमिति ब्रह्मन्कथ वक्तु न शक्यते ।
आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विज ।।

ब्राह्मण उवाच ।

शब्दोऽहमिति दोषाय आत्मन्येष तथैव तत् ।
अनात्मन्यात्मविज्ञान शब्दो वा भ्रान्तिलक्षण. ।।
जिह्वा ब्रवीत्यहमिति दन्तौष्ठं तालुक नृप ।
एते नाह यत सर्वे वाङ्निष्पादनहेतव. ।।

किं हेतुभिर्वदत्येषा वागेवाहमिति स्वयम् ।
तथापि वाङ्नाहमेतद्वक्तुमित्थं न युज्यते ॥
पिण्डः पृथग्यतः पुंसः पादपाण्यादिलक्षणः ।
ततोऽहमिति कुत्रैतां संज्ञां राजन्करोम्यहम् ॥
यदान्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ।
तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते ॥
यदा समस्तदेहेषु पुमानेको व्यवस्थितः ।
तदा हि को भवान्कोऽहमित्येतद्विफलं वचः ॥
त्वं राजा शिबिका चेयमिमे वाहाः पुरःसराः ।
अयं च भवतो लोको न सदेतत्तवोच्यते ॥
वृक्षाद्दारु ततश्चेयं शिबिका त्वदधिष्ठिता ।
किं वृक्षसंज्ञा वास्याः स्याद्दारुसंज्ञाथ वा नृप ॥
वृक्षारूढो महाराजो नायं वदति ते जनः ।
न च दारुणि सर्वस्त्वां ब्रवीति शिबिकागतम् ॥
शिबिका दारुसंघातो रचनास्थितिसंस्थितः ।
अन्विष्यतां नृपश्रेष्ठ तद्भेदे शिबिका त्वया ॥
एवं छत्रशलाकानां पृथग्भावो विमृश्यताम् ।
क्व यातं छत्रमित्येष न्यायस्त्वयि तथा मयि ॥
पुमान्स्त्री गौरजो वाजी कुञ्जरोऽविर्हरिस्तरुः ।
देहेषु लोकसंज्ञेयं विज्ञेया कर्महेतुषु ॥
पुमान्न देवो न नरो न पशुर्न च पादपः ।
शरीराकृतिभेदास्तु भूपैते कर्मयोनयः ॥
वस्तु राजेति यल्लोके यच्च राजभटात्मकम् ।
तथान्यच्च नृपेत्थं तन्न सत्संकल्पनामयम् ॥
यत्तु कालान्तरेणापि नान्यां संज्ञामुपैति वै ।
परिणामादिसंभूतं तद्वस्तु नृप तच्च किम् ॥
त्वं राजा सर्वलोकस्य पितुः पुत्रो रिपो रिपुः ।
पत्न्याः पतिः पिता सूनोः किं त्वां भूप वदाम्यहम् ॥
त्वं किमेतच्छिरः किं नु शिरस्तव तथोदरम् ।
किमु पादादिकं त्वं वा तवैतत्किं महीपते ॥

समस्तावयवेभ्यस्त्व पृथग्भूप व्यवस्थित ।
कोऽहमित्यत्र निपुणो भूत्वा चिन्तय पार्थिव ।।
एव व्यवस्थिते तत्त्वे मयाहमिति भाषितुम् ।
पृथक्करणनिष्पाद्य शक्यते नृपते कथम् ।।

पराशर उवाच ।

निशम्य तस्येति वच परमार्थसमन्वितम् ।
प्रश्रयावनतो भूत्वा तमाह नृपतिर्द्विजम् ।।

राजोवाच ।

भगवन्यत्त्वया प्रोक्त परमार्थमय वच ।
श्रुते तस्मिन्भ्रमन्तीव मनसो मम वृत्तय ।।
एतद्विवेकविज्ञान यदशेषेषु जन्तुषु ।
भवता दर्शित विप्र तत्पर प्रकृतेर्महत् ।।
नाहं वहामि शिबिका शिबिका न मयि स्थिता ।
शरीरमन्यदस्मत्तो येनेय शिबिका धृता ।।
गुणप्रवृत्त्या भूतानां प्रवृत्ति कर्मचोदिता ।
प्रवर्तन्ते गुणा ह्येते किमेतद्यत्त्वयोदितम् ।।
एतस्मिन्परमार्थज्ञ मम श्रोत्रपथ गते ।
मनो विह्वलतामेति परमार्थार्थिता गतम् ।।
पूर्वमेव महाभाग कपिलर्षिमह द्विज ।
प्रष्टुमभ्युद्यतो गत्वा श्रेय कि त्वत्र शस मे ।।
तदन्तरे च भवता यदेतद्वाक्यमीरितम् ।
तेनैव परमार्थार्थं त्वयि चेत प्रधावति ।।
कपिलर्षिर्भगवत सर्वभूतस्य वै द्विज ।
विष्णोरशो जगन्मोहनाशायोर्वीमुपागत ।।
स एव भगवान्नूनमस्माक हितकाम्यया ।
प्रत्यक्षतामत्र गतो यथैतद्भवतोच्यते ।।
तन्मह्य प्रणताय त्व यच्छ्रेय परम द्विज ।
तद्वदाखिलविज्ञानजलवीच्युदधिर्भवान् ।।

ब्राह्मण उवाच ।

भूप पृच्छसि कि श्रेय परमार्थं नु पृच्छसि ।
श्रेयांसि परमार्थानि अशेषाणि च भूपते ॥
देवताराधन कृत्वा धनसपदमिच्छति ।
पुत्रानिच्छति राज्य च श्रेयस्तस्यैव तन्नृप ॥
कर्म यज्ञात्मक श्रेय· स्वर्लोकफलदायि च ।
श्रेय: प्रधान च फले तदेवानभिसधिते ॥
आत्मा ध्येय. सदा भूप योगयुक्तैस्तथा परम् ।
श्रेयस्तस्यैव सयोग श्रेयो य. परमात्मना ॥
श्रेयास्येवमनेकानि शतशोऽथ सहस्रशः ।
सन्त्यत्र परमार्थस्तु तत्त्वत श्रूयतां च मे ॥
धर्माय त्यज्यते कि नु परमार्थो धन यदि ।
व्ययश्च क्रियते कस्मात्कामप्राप्त्युपलक्षणः ॥
पुत्रश्चेत्परमार्थ. स्यात्सोऽप्यन्यस्य नरेश्वर ।
परमार्थभूतः सोऽन्यस्य परमार्थो हि तत्पिता ॥
एव न परमार्थोऽस्ति जगत्यस्मिंश्चराचरे ।
परमार्था हि कार्याणि कारणानामशेषतः ॥
राज्यादिप्राप्तिरत्रोक्ता परमार्थतया यदि ।
परमार्था भवन्त्यत्र न भवन्ति च वै तत. ॥
ऋग्यजु.सामनिष्पाद्य यज्ञकर्म मत तव ।
परमार्थभूत तत्रापि श्रूयतां गदतो मम ॥
यत्तु निष्पाद्यते कार्यं मृदा कारणभूतया ।
तत्कारणानुगमनाज्जायते नृप मृन्मयम् ॥
एव विनाशिभिर्द्रव्यै. समिदाज्यकुशादिभि. ।
निष्पाद्यते क्रिया या तु सा भवित्री विनाशिनी ॥
अनाशी परमार्थस्तु प्राज्ञैरभ्युपगम्यते ।
तत्तु नाशि न संदेहो नाशिद्रव्योपपादितम् ॥
तदेवाफलदं कर्म परमार्थो मतस्तव ।
मुक्तिसाधनभूतत्वात्परमार्थो न साधनम् ॥

ध्यानं चैवात्मनो भूप परमार्थार्थशब्दितम् ।
भेदकारि परेभ्यस्तु परमार्थो न भेदवान् ॥
परमात्मात्मनोर्योग परमार्थ इतीर्यते ।
मिथ्यैतदन्यद्द्रव्य हि नैति तद्द्रव्यता यत ॥
तस्माच्छ्रेयास्यशेषाणि नृपैतानि न सशय ।
परमार्थस्तु भूपाल सक्षेपाच्छ्रूयता मम ॥
एको व्यापी सम शुद्धो निर्गुण. प्रकृते. परः ।
जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्यय ॥
परज्ञानमयोऽसद्भिर्नामजात्यादिभिर्विभु ।
स योगवान्न युक्तोऽभून्नैव पार्थिव योज्यते ॥
तस्यात्मपरदेहेषु सतोऽप्येकमय हि यत् ।
विज्ञान परमार्थोऽसौ द्वैतिनोऽतत्त्वदर्शिन. ॥
वेणुरन्ध्रविभेदेन भेद. षड्जादिसञ्ज्ञितः ।
अभेदव्यापिनो वायोस्तथा तस्य महात्मन. ॥
एकत्व रूपभेदश्च बाह्यकर्मप्रवृत्तिज ।
देवादिभेदेऽपध्वस्ते नास्त्येवावरणे हि स. ॥

पराशर उवाच ।

इत्युक्ते मौनिन भूयश्चिन्तयान महीपतिम् ।
प्रत्युवाचाथ विप्रोऽसावद्वैतान्तर्गता कथाम् ॥

ब्राह्मण उवाच ।

श्रूयता नृपशार्दूल यद्गीतमृभुणा पुरा ।
अवबोध जनयता निदाघस्य महात्मन ॥
ऋभुर्नामाभवत्पुत्रो ब्रह्मण परमेष्ठिन. ।
विज्ञाततत्त्वसद्भावो निसर्गादेव भूपते ॥
तस्य शिष्यो निदाघोऽभूत्पुलस्त्यतनय. पुरा ।
प्रादादशेषविज्ञान स तस्मै परया मुदा ॥
अवाप्तज्ञानतत्त्वस्य न तस्याद्वैतवासनाम् ।
स ऋभुस्तर्कयामास निदाघस्य नरेश्वर ॥
देविकायास्तटे वीरनगर नाम वै पुरम् ।
समृद्धमतिरम्य च पुलस्त्येन निवेशितम् ॥

रम्योपवनपर्यन्ते स तस्मिन्पार्थिवोत्तम ।
निदाघो नाम योगज्ञ ऋभुशिष्योऽवसत्पुरा ।।
दिव्ये वर्षसहस्रे तु समतीतेऽस्य तत्पुरम् ।
जगाम स ऋभुः शिष्यं निदाघमवलोककः ।।
स तस्य वैश्वदेवान्ते द्वारालोकनगोचरे ।
स्थितस्तेन गृहीतार्घ्यो निजवेश्म प्रवेशितः ।।
प्रक्षालिताङ्घ्रिपाणिं च कृतासनपरिग्रहम् ।
उवाच स द्विजश्रेष्ठो भुज्यतामिति सादरम् ।।

ऋभुरुवाच ।

भो विप्रवर्य भोक्तव्यं यदन्नं भवतो गृहे ।
तत्कथ्यतां कदन्नेषु न प्रीतिः सततं मम ।।

निदाघ उवाच ।

सक्तुयावकवाट्यानामपूपानां च मे गृहे ।
यद्रोचते द्विजश्रेष्ठ तत्त्वं भुङ्क्ष्व यथेच्छया ।।

ऋभुरुवाच ।

कदन्नानि द्विजैतानि मृष्टमन्नं प्रयच्छ मे ।
संयावपायसादीनि द्रप्सफाणितवन्ति च ।।

निदाघ उवाच ।

हे हे शालिनि मद्गेहे यत्किंचिदतिशोभनम् ।
भक्ष्योपसाधनं मृष्टं तेनास्यान्नं प्रसाधय ।।

ब्राह्मण उवाच ।

इत्युक्ता तेन सा पत्नी मृष्टमन्नं द्विजस्य यत् ।
प्रसाधितवती तद्वै भर्तुर्वचनगौरवात् ।।
तं भुक्तवन्तमिच्छातो मृष्टमन्नं महामुनिम् ।
निदाघः प्राह भूपाल प्रश्रयावनतः स्थितः ।।

निदाघ उवाच।

अपि ते परमा तृप्तिरुत्पन्ना तुष्टिरेव च।
अपि ते मानसं स्वस्थमाहारेण कृतं द्विज॥
क्वनिवासो भवान्विप्र क्व च गन्तु समुद्यत·।
आगम्यते च भवता यतस्तच्च द्विजोच्यताम्॥

ऋभुरुवाच।

क्षुद्यस्य तस्य भुक्तेऽन्ने तृप्तिर्ब्राह्मिण जायते।
न मे क्षुन्नाभवत्तृप्ति· कैस्मान्मा परिपृच्छसि॥
वह्निना पार्थिवे धातौ क्षयिते क्षुत्समुद्भवः।
भवत्यम्भसि च क्षीणे नृणा तृडपि जायते॥
क्षुत्तृषौ देहधर्माख्ये न ममैते यतो द्विज।
ततः क्षुत्सभवाभावात्तृप्तिरस्त्येव मे सदा॥
मनस· स्वस्थता तुष्टिश्चित्तधर्माविमौ द्विज।
चेतसो यस्य तत्पृच्छ पुमानेभिर्न युज्यते॥
क्व निवासस्तवेत्युक्त क्व गन्तासि च यत्त्वया।
कुतश्चागम्यते तत्र त्रितयेऽपि निबोध मे॥
पुमान्सर्वगतो व्यापी आकाशवदय यत·।
कुत· कुत्र क्व गन्तासीत्येतदप्यर्थवत्कथम्॥
नाह गन्ता न चागन्ता नैकदेशनिकेतन ।
त्वं चान्ये च न च त्व च नान्ये नैवाहमप्यहम्॥
मृष्ट न मृष्टमप्येषा जिज्ञासा मे कृता तव।
कि वक्ष्यसीति तत्रापि श्रूयता द्विजसत्तम॥
किमस्मादथवा मृष्ट भुञ्जतोऽन्न द्विजोत्तम।
मृष्टमेव यदामृष्ट तदैवोद्वेगकारकम्॥
अमृष्ट जायते मृष्ट मृष्टादुद्विजते जन ।
आदिमध्यावसानेषु किमन्न रुचिकारकम्॥
मृन्मय हि गृह यद्वन्मृदा लिप्तं स्थिर· भवेत्।
पार्थिवोऽय तथा देह पार्थिवै· परमाणुभि·॥

यवगोधूममुद्गादि घृत तैलं पयो दधि ।
गुडं फलादीनि तथा पार्थिवाः परमाणवः ।।
तदेतद्भवता ज्ञात्वा मृष्टामृष्टविचारि यत् ।
तन्मनः समतालम्बि कार्यं साम्य हि मुक्तये ।।

ब्राह्मण उवाच ।

इत्याकर्ण्य वचस्तस्य परमार्थाश्रित नृप ।
प्रणिपत्य महाभागो निदाघो वाक्यमब्रवीत् ।।

निदाघ उवाच ।

प्रसीद मद्धितार्थाय कथ्यतां यस्त्वमागतः ।
नष्टो मोहस्तवाकर्ण्य वचांस्येतानि मे द्विज ।।

ऋभुरुवाच ।

ऋभुरस्मि तवाचार्यः प्रज्ञादानाय ते द्विज ।
इहागतोऽहं यास्यामि परमार्थस्तवोदितः ।।
एवमेकमिदं विद्धि न भेदि सकलं जगत् ।
वासुदेवाभिधेयस्य स्वरूपं परमात्मनः ।।

ब्राह्मण उवाच ।

तथेत्युक्त्वा निदाघेन प्रणिपातपुरःसरम् ।
पूजितः परया भक्त्या इच्छातः प्रययावृभुः ।।
ऋभुर्वर्षसहस्रे तु समतीते नरेश्वर ।
निदाघज्ञानदानाय तदेव नगरं ययौ ।।
नगरस्य वहिः सोऽथ निदाघं ददृशे मुनिः ।
महावलपरीवारे पुरं विशति पार्थिवे ।।
दूरे स्थितं महाभागं जनसमर्दवर्जकम् ।
क्षुत्क्षामकण्ठमायान्तमरण्यात्ससमित्कुशम् ।।
दृष्ट्वा निदाघं स ऋभुरुपगम्याभिवाद्य च ।
उवाच कस्मादेकान्ते स्थीयते भवता द्विज ।।

निदाघ उवाच ।

भो विप्र जनसंमर्दो महानेष जनेश्वरे ।
प्रविविक्षौ पुर रम्य तेनात्र स्थीयते मया ॥

ऋभुरुवाच ।

नराधिपोऽत्र कतम॰ कतमश्चेतरो जनः ।
कथ्यता मे द्विजश्रेष्ठ त्वमभिज्ञो मतो मम ॥

निदाघ उवाच ।

योऽय गजेन्द्रमुन्मत्तमद्रिशृङ्गसमुच्छ्रितम् ।
अधिरूढो नरेन्द्रोऽय परलोकस्तथेतर॰ ॥

ऋभुरुवाच ।

एतौ हि गजराजानौ युगपद्दर्शितौ मम ।
भवता न विशेषेण पृथक्चिह्नोपलक्षणौ ॥
तत्कथ्यता महाभाग विशेषो भवतानयो ।
ज्ञातुमिच्छाम्यह कोऽत्र गजः को वा नराधिपः ॥

निदाघ उवाच ।

गजो योऽयमधो ब्रह्मन्नुपर्यस्यैव भूपतिः ।
वाह्यवाहकसबन्ध को न जानाति वै द्विज ॥

ऋभुरुवाच ।

जानाम्यह यथा ब्रह्मस्तथा मामवबोधय ।
अध शब्दनिगद्य कि कि चोर्ध्वमभिधीयते ॥

ब्राह्मण उवाच ।

इत्युक्त सहसारुह्य निदाघः प्राह तमृभुम् ।
श्रूयता कथयाम्येष यन्मा त्व परिपृच्छसि ॥
उपर्यह यथा राजा त्वमध कुञ्जरो यथा ।
अवबोधाय ते ब्रह्मन्दृष्टान्तो दर्शितो मया ॥

ऋभुरुवाच ।

त्व राजेव द्विजश्रेष्ठ स्थितोऽह गजवद्यदि ।
तदेतत्त्व समाचक्ष्व कतमस्त्वमहं तथा ॥

ब्राह्मण उवाच ।

इत्युक्त. सत्वरं तस्य प्रगृह्य चरणावुभौ ।
निदाघः प्राह भगवानाचार्यस्त्वमृभुर्ध्रुवम् ॥
नान्यस्याद्वैतसंस्कारसस्कृतं मानसं तथा ।
यथाचार्यस्य तेन त्वां मन्ये प्राप्तमहं गुरुम् ॥

ऋभुरुवाच ।

तवोपदेशदानाय पूर्वशुश्रूषणादृतः ।
गुरुस्तेऽहमृभुर्नाम्ना निदाघ समुपागत. ॥
तदेतदुपदिष्टं ते सक्षेपेण महामते ।
परमार्थसारभूतं यदद्वैतमशेषत ॥

ब्राह्मण उवाच ।

एवमुक्त्वा ययौ विद्वान्निदाघं स ऋभुर्गुरु ।
निदाघोऽप्युपदेशेन तेनाद्वैतपरोऽभवत् ॥
सर्वभूतान्यभेदेन ददृशे स तदात्मन ।
यथा ब्रह्मपरो मुक्तिमवाप परमां द्विजः ॥
तथा त्वमपि धर्मज्ञ तुल्यात्मरिपुबान्धव. ।
भव सर्वगतं जानन्नात्मानमवनीपते ॥
सितनीलादिभेदेन यथैक दृश्यते नभ ।
भ्रान्तदृष्टिभिरात्मापि तथैक. सन्पृथक्पृथक् ॥
एक समस्त यदिहास्ति किंचि-
त्तदच्युतो नास्ति पर ततोऽन्यत् ।
सोऽहं स च त्व स च सर्वमेत-
दात्मस्वरूपं त्यज भेदमोहम् ॥

पराशर उवाच ।

इतीरितस्तेन स राजवर्य-
स्तत्याज भेद परमार्थदृष्टिः ।
स चापि जातिस्मरणात्मबोध-
स्तत्रैव जन्मन्यपवर्गमाप ॥

# पुरूरवउर्वश्युपाख्यानम्

(विष्णुपु० ४।६)

पुरूरवास्त्वतिदानशीलोऽतियज्वातितेजस्वी। यं सत्यवादिनमतिरूपस्ववन्तं मित्रावरुणशापान्मानुषे लोके मया वस्तव्यमिति कृतमतिरुर्वशी ददर्श। दृष्टमात्रे च यस्मिन्नपहाय मानमशेषमपास्य स्वर्गसुखाभिलाषं तन्मना भूत्वा तमेवोपतस्थे। सोऽपि च तामतिशयितसकललोकस्त्रीकान्तिसौकुमार्यलावण्यातिविलासहासादिगुणामवलोक्य तदायत्तचित्तवृत्तिर्बभूव। उभयमपि तन्मनस्कमनन्यदृष्टि परित्यक्तसमस्तान्यप्रयोजनमभूत्।

राजा तु प्रागल्भ्यात्तामाह। सुभ्रु त्वामहमभिकामोऽस्मि प्रसीदानुरागमुद्वह। इत्युक्ता लज्जावखण्डितमुर्वशी प्राह। भवत्वेवं यदि मे समयपरिपालन भवान्करोतीति। आख्याहि मे समयमित्यथ पृष्टा पुनरब्रवीत्। शयनसमीपे ममोरणकद्वयं पुत्रभूतं नापनेयम्। भवाश्च मया नग्नो न द्रष्टव्यः। घृतमात्रं च ममाहार इति। एवमेवेति भूपतिराह।

तया च सहावनीपतिरलकायां चैत्ररथादिवनेष्वमलपद्मपण्डेषु अतिरमणीयेषु मानसादिसरःस्वभिरममाण एव षष्टिवर्षसहस्राण्यनुदिनप्रवर्धमानप्रमोदोऽनयत्। उर्वशी च तदुपभोगात्प्रतिदिनप्रवर्धमानानुरागा अमरलोकवासेऽपि न स्पृहा चकार। विना चोर्वश्या सुरलोकोऽप्सरसां सिद्धगन्धर्वाणां च नातिरमणीयोऽभवत्।

ततश्चोर्वशीपुरूरवसोः समयविद्विश्वावसुर्गन्धर्वसमवेतो निशि शयनाभ्याशादेकमुरणकं जहार। तस्याकाशे नीयमानस्योर्वशी शब्दमशृणोत्। आह च ममानाथायाः पुत्रः केनाप्ययमपह्रियते कं शरणमुपयामीति। तदाकर्ण्य राजा मां नग्नं देवी वीक्ष्यतीति न ययौ। अथान्यमप्युरणकमादाय गन्धर्वा ययुः। तस्याप्यपह्रियमाणस्य शब्दमाकर्ण्याकाशे पुनरप्यनाथास्म्यहमभर्तृका कुपुरुषाश्रयेत्यार्तराविणी बभूव। राजाप्यमर्षवशादन्धकारमेतदिति खड्गमादाय दुष्ट दुष्ट हतोऽसीति व्याहरन्नभ्यधावत्। तावच्च गन्धर्वैरतीवोज्ज्वला विद्यु-

ज्जनिता। तत्प्रभया चोर्वशी राजानमपगताम्बरं दृष्ट्वापवृत्तसमया तत्क्षणादेवापक्रान्ता। परित्यज्य तावप्युरणकौ गन्धर्वाः सुरलोकमुपगता.। राजापि तौ मेषावादाय हृष्टमना स्वशयनमायातो नोर्वशी ददर्श।

ता चापश्यन्नपगताम्वर एवोन्मत्तरूपो वभ्राम। कुरुक्षेत्रे चाम्भोजसरस्यन्याभिश्चतसृभिरप्सरोभि. समवेतामुर्वशी ददर्श। ततश्चोन्मत्तरूपो राजा जाये ह तिष्ठ मनसि घोरे वचसि इत्येवमनेकप्रकार सूक्तमवोचत्।

आह चोर्वशी महाराज अलमनेनाविवेकचेष्टितेन। अन्तर्वत्न्यहमब्दान्ते भवतात्रागन्तव्य कुमारस्ते भविष्यति एकां च निशामह त्वया सह वत्स्यामीत्युक्त' प्रहृष्ट. स्वपुरमाजगाम। तासा चाप्सरसामुर्वशी कथयामास। अय स पुरुषोत्कर्षो येनाहमेतावन्त कालमनुरागाकृष्टमनसा सहोषिता। इत्येवमुक्तास्ता अप्सरस ऊचु। साधु साधु अस्य रूपमनेन सहास्माकमपि सर्वकालमभिरन्तु स्पृहा भवेदिति।

अब्दे च पूर्णे स राजा तत्राजगाम। कुमार चायुपमस्मै तदोर्वशी ददौ। एका च निशा तेन राज्ञा सहोषित्वा पञ्चपुत्रोत्पत्तये गर्भमवाप। उवाच चैन राजानमस्मत्प्रीत्या महाराजाय सर्वं एव गन्धर्वा वरदा. संवृत्तास्तस्माद्व्रियता वर इति। आह राजा च। विजितसकलारातिरविहतेन्द्रियसामर्थ्यो बन्धुमानमितबलकोषो नान्यदस्माकमुर्वशीसालोक्यादप्राप्यमस्ति। तदहमनया सहोर्वश्या कालं नेतुमभिलषामि। इत्युक्ते गन्धर्वा राज्ञेऽग्निस्थाली ददु। ऊचुश्च एनमग्निमाम्नायानुसारी भूत्वा त्रिधा कृत्वा उर्वशीसलोकतामनोरथमुद्दिश्य सम्यग्यजेथा। ततोऽवश्यमभिलषितमवाप्स्यसि। इत्युक्तस्तामग्निस्थालीमादायाजगामान्तरटव्याम्। अचिन्तयदहो मे अतिमूढता यदग्निस्थाली मयानीता नोर्वशीति। अथैनामटव्यामेवाग्निस्थाली तत्याज स्वपुर चाजगाम।

व्यतीतार्धरात्रौ विनिद्रश्चाचिन्तयत्। ममोर्वशीसालोक्यप्राप्त्यर्थमग्निस्थाली गन्धर्वैर्दत्ता। सा च मयाटव्या परित्यक्ता। तदह तत्र तदाहरणाय यास्यामि। इत्युत्थाय तत्राप्युपगतो नाग्निस्थालीमपश्यत्। शमीगर्भं चाश्वत्थमग्निस्थालीस्थाने दृष्ट्वाचिन्तयत्। मयात्र

स्थाली निक्षिप्ता। सा चाश्वत्थः शमीगर्भोऽभूत्। तदेतमेवाहमग्निरूपमादाय स्वपुरमभिगम्यारणी कृत्वा तदुत्पन्नाग्नेरुपास्तिं करिष्यामीति।

एवमेव स्वपुरमुपगतोऽरणी चकार। तत्प्रमाण चाङ्गुलैः कुर्वन्गायत्रीमपठत्। पठतश्चाक्षरसख्यान्येवाङ्गुलान्यरण्यभवत्। तत्राग्निं निर्मथ्याग्नित्रयमाम्नायानुसारी भूत्वा जुहाव। उर्वशीसालोक्यं चेह फलमभिसंहितवान्। तेनैवाग्निविधिना वहुविधान्यज्ञानिष्ट्वा गन्धर्वलोकान्प्राप्योर्वश्या सह वियोग नावाप।

# रासक्रीडा

(विष्णुपु० ५।१३)

पराशर उवाच ।

गते शक्रे तु गोपाला कृष्णमक्लिष्टकारिणम् ।
ऊचु प्रीत्या धृत दृष्ट्वा तेन गोवर्धनाचलम् ।।
वयमस्मान्महाबाहो भवता महतो भयात् ।
गावश्च भवता त्राता गिरिधारणकर्मणा ।।
बालक्रीडेयमतुला गोपालत्व जुगुप्सितम् ।
दिव्य च कर्म भवत' किमेतत्तात कथ्यताम् ।।
कालियो दमितस्तोये प्रलम्बो विनिपातित ।
धृतो गोवर्धनश्चाय शङ्कितानि मनासि न' ।।
सत्य सत्य हरे पादौ शपामोऽमितविक्रम ।
यथा त्वद्वीर्यमालोक्य न त्वा मन्यामहे नरम् ।।
प्रीति. सस्त्रीकुमारस्य व्रजस्य तव केशव ।
कर्म चेदमशक्य यत्समस्तैस्त्रिदशैरपि ।।
बालत्व चातिवीर्यं च जन्म चास्मास्वशोभनम् ।
चिन्त्यमानममेयात्मञ्शङ्का कृष्ण प्रयच्छति ।।
देवो वा दानवो वा त्व यक्षो गन्धर्व एव वा ।
किं वास्माक विचारेण बान्धवोऽसि नमोऽस्तु ते ।।
क्षण भूत्वा त्वसौ तूष्णी किंचित्प्रणयकोपवान् ।
इत्येवमुक्तस्तैर्गोपे कृष्णोऽप्याह महामुने ।।

श्रीभगवानुवाच ।

मत्सबन्धेन भो गोपा यदि लज्जा न जायते ।
श्लाघ्यो वाह तत किं वो विचारेण प्रयोजनम् ।।
यदि वोऽस्ति मयि प्रीति श्लाघ्योऽह भवतां यदि ।
तदात्मबन्धुसदृशी बुद्धिर्व क्रियता मयि ।।

नाहं देवो न गन्धर्वो न यक्षो न च दानवः ।
अहं वो बान्धवो जातो नास्ति चिन्त्यमतोऽन्यथा ॥

पराशर उवाच ।

इति श्रुत्वा हरेर्वाक्यं बद्धमौनास्ततो वनम् ।
ययुर्गोपा महाभाग तस्मिन्प्रणयकोपिनि ॥
कृष्णस्तु विमलं व्योम शरच्चन्द्रस्य चन्द्रिकाम् ।
तथा कुमुदिनीं फुल्लामामोदितदिगन्तराम् ॥
वनराजिं तथा कूजद्भृङ्गमालां मनोरमाम् ।
विलोक्य सह गोपीभिर्मनश्चक्रे रतिं प्रति ॥
सह रामेण मधुरमतीव वनिताप्रियम् ।
जगौ कलपदं शौरिर्नानातन्त्रीकृतव्रतम् ॥
रम्यं गीतध्वनिं श्रुत्वा संत्यज्यावसथांस्तदा ।
आजग्मुस्त्वरिता गोप्यो यत्रास्ते मधुसूदनः ॥
शनैः शनैर्जगौ गोपी काचित्तस्य लयानुगम् ।
दत्तावधाना काचित्तु तमेव मनसास्मरत् ॥
काचित्कृष्णेति कृष्णेति प्रोक्त्वा लज्जामुपागता ।
ययौ च काचित्प्रेमान्धा तत्पार्श्वमविलज्जिता ॥
काचिदावसथस्यान्तः स्थिता दृष्ट्वा बहिर्गुरून् ।
तन्मयत्वेन गोविन्दं दध्यौ मीलितलोचना ॥
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ।
तदप्राप्तिमहादुःखविलीनाशेषपातका ॥
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका ॥
गोपीपरिवृतो रात्रिं शरच्चन्द्रमनोरमाम् ।
मानयामास गोविन्दो रासारम्भरसोत्सुकः ॥
गोप्यश्च वृन्दशः कृष्णचेष्टास्वायत्तमूर्त्तयः ।
अन्यदेशं गते कृष्णे चेरुर्वृन्दावनान्तरम् ॥
कृष्णे निरुद्धहृदया इदमूचुः परस्परम् ।
कृष्णोऽहमेतल्ललितं व्रजाम्यालोक्यतां गतिः ।

अन्या ब्रवीति कृष्णस्य मम गीतिर्निशम्यताम् ।।
दुष्टकालिय तिष्ठात्र कृष्णोऽहमिति चापरा ।
बाहुमास्फोटच कृष्णस्य लीलासर्वस्वमाददे ।।
अन्या ब्रवीति भो गोपा नि शङ्कै स्थीयतामिह ।
अल वृष्टिभयेनात्र धृतो गोवर्धनो मया ।
धेनुकोऽयं मया क्षिप्तो विचरन्तु यथेच्छया ।
गोपी ब्रवीति वै चान्या कृष्णलीलानुकारिणी ।।
एव नानाप्रकारासु कृष्णचेष्टासु तास्तदा ।
गोप्यो व्यग्रा सम चेरू रम्य वृन्दावन वनम् ।।
विलोक्यैका भुव प्राह गोपी गोपवराङ्गना ।
पुलकाञ्चितसर्वाङ्गी विकाशिनयनोत्पला ।।
ध्वजवज्राकुशाब्जाङ्करेखावन्त्यालि पश्यत ।
पदान्येतानि कृष्णस्य लीलालक्तगामिन ।।
कापि तेन सम याता कृतपुण्या मदालसा ।
पदानि तस्याश्चैतानि घनान्यल्पतनूनि च ।।
पुष्पावचयमत्रोच्चैश्चक्रे दामोदरो ध्रुवम् ।
येनाग्राक्रान्तिमात्राणि पदान्यत्र महात्मन ।।
अत्रोपविश्य सा तेन कापि पुष्पैरलकृता ।
अन्यजन्मनि सर्वात्मा विष्णुरभ्यर्चितो यया ।।
पुष्पबन्धनसमानकृतमानामपास्य ताम् ।
नन्दगोपसुतो यातो मार्गेणानेन पश्यत ।।
अनुयानेऽसमर्थान्या नितम्बभरमन्थरा ।
या गन्तव्ये द्रुत याति निम्नपादाग्रसस्थिति ।।
हस्तन्यस्ताग्रहस्तेय तेन याति तथा सखि ।
अनायत्तपदन्यासा लक्ष्यते पदपद्धति. ।।
हस्तसस्पर्शमात्रेण धूर्तेनैषा विमानिता ।
नैराश्यमन्दगामिन्या निवृत्त लक्ष्यते पदम् ।।
नूनमुक्ता त्वरामीति पुनरेष्यामि तेऽन्तिकम् ।
तेन कृष्णेन येनैषा त्वरिता पदपद्धति ।।
प्रविष्टो गहन कृष्ण. पदमत्र न लक्ष्यते ।

निवर्तध्वं शशाङ्कस्य नैतद्दीधितिगोचरे ॥
निवृत्तास्तास्ततो गोप्यो निराशाः कृष्णदर्शने ।
यमुनातीरमागत्य जगुस्तच्चरित तदा ॥
ततो ददृशुरायान्तं विकाशिमुखपङ्कजम् ।
गोप्यस्त्रैलोक्यगोप्तार कृष्णमक्लिष्टचेष्टितम् ॥
काचिदालोक्य गोविन्दमायान्तमतिहर्षिता ।
कृष्ण कृष्णेति कृष्णेति प्राह नान्यदुदैरयत् ॥
काचिद्भ्रूभङ्गर कृत्वा ललाटफलकं हरिम् ।
विलोक्य नेत्रभृङ्गाभ्या पपौ तन्मुखपङ्कजम् ॥
काचिदालोक्य गोविन्द निमीलितविलोचना ।
तस्यैव रूपं ध्यायन्ती योगारूढेव चावभौ ॥
तत काश्चित्प्रियालापै. काश्चिद्भ्रूभङ्गवीक्षणै· ।
निन्येऽनुनयमन्याश्च करस्पर्शेन माधव· ॥
ताभिः प्रसन्नचित्ताभिर्गोपीभिः सह सादरम् ।
रराम रासगोष्ठीभिरुदारचरितो हरिः ॥
रासमण्डलवन्धोऽपि कृष्णपार्श्वमनुज्झता ।
गोपीजनेन नैवाभूदेकस्थानस्थिरात्मना ॥
हस्ते प्रगृह्य चैकैका गोपिका रासमण्डलीम् ।
चकार तत्करस्पर्शनिमीलितदृश हरि ॥
तत. स ववृते रासश्चलद्वलयनिस्वन. ।
अनुयातशरत्काव्यगेयगीतिरनुक्रमात् ॥
कृष्ण. शरच्चन्द्रमसं कौमुदी कुमुदाकरम् ।
जगौ गोपीजनस्त्वेकं कृष्णनाम पुन· पुनः ॥
परिवर्तश्रमेणैका चलद्वलयलापिनीम् ।
ददौ बाहुलता स्कन्धे गोपी मधुनिघातिनः ॥
काचित्प्रविलसद्बाहुः परिरभ्य चुचुम्ब तम् ।
गोपी गीतस्तुतिव्याजनिपुणा मधुसूदनम् ॥
गोपीकपोलसंश्लेषमभिपत्य हरेर्भुजौ ।
पुलकोद्गमसस्याय स्वेदाम्बुघनता गतौ ॥
रासगेय जगौ कृष्णो यावत्तारतरध्वनिः ।

साधु कृष्णेति कृष्णेति तावत्ता द्विगुण जगु ॥
गतेऽनुगमन चक्रुर्वलने समुख ययु ।
प्रतिलोमानुलोमाभ्या भेजुर्गोपाङ्गना हरिम् ॥
स तथा सह गोपीभी रराम मधुसूदन. ।
यथाब्दकोटिप्रमित क्षणस्तेन विनाभवत् ॥
ता वार्यमाणा पतिभि पितृभिर्भ्रातृभिस्तथा ।
कृष्णं गोपाङ्गना रात्रौ रमयन्ति रतिप्रिया ॥
सोऽपि कैशोरकवयो मानयन्मधुसूदन ।
रेमे ताभिरमेयात्मा क्षपासु क्षपिताहित ॥
तद्भर्तृषु तथा तासु सर्वभूतेषु चेश्वर ।
आत्मस्वरूपरूपोऽसौ व्याप्य सर्वमवस्थित ॥

# कचदेवयानीसंवादः

(मत्स्यपु० २५-२६)

शौनक उवाच ।

गुरोरुष्य सकाशे च दश वर्षशतानि स॰ ।
अनुज्ञात कचो गन्तुमियेष त्रिदशालयम् ॥
समापितव्रतं त तु विसृष्टं गुरुणा तदा ।
प्रस्थित त्रिदशावास देवयानीदमब्रवीत् ॥

देवयान्युवाच ।

ऋषेरङ्गिरस. पौत्र वृत्तेनाभिजनेन च ।
भ्राजसे विद्यया चैव तपसा च दमेन च ॥
ऋषिर्यथाङ्गिरा मान्य॰ पितुर्मम महायशा॰ ।
तथा मान्यश्च पूज्यश्च मम भूयो बृहस्पतिः ॥
एवं ज्ञात्वा विजानीहि यद्ब्रवीमि तपोधन ।
व्रतस्थे नियमोपेते यथा वर्ताम्यहं त्वयि ॥
स समापितविद्यो मा भक्तां न त्यक्तुमर्हसि ।
गृहाण पाणि विधिवन्मम मन्त्रपुरस्कृतम् ॥

कच उवाच ।

पूज्यो मान्यश्च भगवान्यथा मम पिता तव ।
तथा त्वमनवद्याङ्गि पूजनीयतमा मता ॥
आत्मप्राणैः प्रियतमा भार्गवस्य महात्मनः ।
त्व भद्रे धर्मतः पूज्या गुरुपुत्री सदा मम ॥
यथा मम गुरुर्नित्यं मान्यः शुक्र. पिता तव ।
देवयानि तथैव त्व नैवं मा वक्तुमर्हसि ॥

देवयान्युवाच ।

गुरुपुत्रस्य पुत्रो मे न तु त्वमसि मे पितु ।
तस्मान्मान्यश्च पूज्यश्च ममापि त्वं द्विजोत्तम ।।
असुरैर्हन्यमाने तु कचे त्वयि पुन· पुन ।
तदाप्रभृति या प्रीतिस्ता त्वमेव स्मरस्व मे ।।
सौहार्दे चानुरागे च वेत्थ मे भक्तिमुत्तमाम् ।
न मामर्हसि धर्मज्ञ त्यक्तु भक्तामनागसम् ।।

कच उवाच ।

अनियोज्ये नियोगे मा नियुनक्षि शुभव्रते ।
प्रसीद सुभ्रूर्मह्यं त्व गुरोर्गुरुतरा शुभे ।।
यत्रोषितं विशालाक्षि त्वया चन्द्रनिभानने ।
तत्राहमुषितो भद्रे कुक्षौ काव्यस्य भामिनि ।।
भगिनी धर्मतो मे त्व मैव वोच शुभानने ।
सुखेनाध्युषितो भद्रे न मन्युर्विद्यते मम ।।
आपृच्छे त्वा गमिष्यामि शिवमस्त्वथ मे पथि ।
अविरोधेन धर्मस्य स्मर्तव्योऽस्मि कथान्तरे ।
अप्रमत्तोद्यता नित्यमाराधय गुरु मम ।।

देवयान्युवाच ।

दैत्यैर्हतस्त्व यद्भर्तृबुद्धया त्व रक्षितो मया ।
यदि मा धर्मकामार्थां प्रत्याख्यास्यसि धर्मत ।
तत कच न ते विद्या सिद्धिमेषा गमिष्यति ।।

कच उवाच ।

गुरुपुत्रीति कृत्वाह प्रत्याख्यास्ये न दोषतः ।
गुरुणा चाभ्यनुज्ञात काममेव शपस्व माम् ।।
आर्षं धर्मं ब्रुवाणोऽह देवयानि यथा त्वया ।
शप्तु नार्होऽस्मि कल्याणि कामतोऽद्य च धर्मत ।।

तस्माद्भवत्या यः कामो न तथा सभविष्यति ।
ऋषिपुत्रो न ते कश्चिज्जातु पाणिं ग्रहीष्यति ।।
फलिष्यति न मे विद्या त्वद्वचश्चेति तत्तथा ।
अध्यापयिष्यामि च यं तस्य विद्या फलिष्यति ।।
एवमुक्त्वा नृपश्रेष्ठ देवयानी कचस्तदा ।
त्रिदशेशालय शीघ्र जगाम द्विजसत्तमः ।।

# नारायणकृतो मार्कण्डेयावबोधः

(मत्स्यपु० १६६–१६७)

मत्स्य उवाच ।

भूत्वा नारायणो योगी सत्त्वमूर्तिर्विभावसु. ।
गभस्तिभि. प्रदीप्ताभि. सशोषयति सागरान् ।।
तत पीत्वार्णवान्सर्वान्नदी कूपाश्च सर्वश ।
पर्वताना च सलिल सर्वमादाय रश्मिभि ।।
भित्त्वा गभस्तिभिश्चैव मही गत्वा रसातलात् ।
पातालजलमादाय पिबते रसमुत्तमम् ।।
मूत्रासृक्क्लेदमन्यच्च यदस्ति प्राणिषु ध्रुवम् ।
तत्सर्वमरविन्दाक्ष आदत्ते पुरुषोत्तम ।।
वायुश्च बलवान्भूत्वा विधुन्वानोऽखिल जगत् ।
प्राणापानसमानाद्यान्वायूनाकर्षते हरि ।।
ततो देवगणा सर्वे भूतान्येव च यानि तु ।
गन्धो घ्राण शरीर च पृथिवी सश्रिता गुणा ।।
जिह्वा रसश्च स्नेहश्च सश्रिता. सलिले गुणा ।
रूप चक्षुर्विपाकश्च ज्योतिरेवाश्रिता गुणा ।।
स्पर्श प्राणश्च चेष्टा च पवने सश्रिता गुणा ।
शब्द श्रोत्र च खान्येव गगने सश्रिता गुणा ।।
लोकमाया भगवता मुहूर्तेन विनाशिता ।
मनो बुद्धिश्च सर्वेषा क्षेत्रज्ञश्चेति य श्रुत ।।
तं वरेण्य परमेष्ठी हृषीकेशमुपाश्रित ।
ततो भगवतस्तस्य रश्मिभि. परिवारित ।।
वायुनाक्रम्यमाणासु द्रुमशाखासु चाश्रित ।
तेषा सघर्षणोद्भूत· पावक शतधा ज्वलन् ।।
अदहच्च तदा सर्वं वृत· सवर्तकोऽनल ।
सपर्वतद्रुमान्गुल्माँल्लतावल्लीस्तृणानि च ।।

विमानानि च दिव्यानि पुराणि विविधानि च ।
यानि चाश्रयणीयानि तानि सर्वाणि सोऽदहत् ॥
भस्मीकृत्य ततः सर्वाँल्लोकाँल्लोकगुरुर्हरिः ।
भूयो निर्वापयामास युगान्तेन च कर्मणा ॥
सहस्रवृष्टिः शतधा भूत्वा कृष्णो महाबलः ।
दिव्यतोयेन हविषा तर्पयामास मेदिनीम् ॥
ततः क्षीरनिकाशेन स्वादुना परमाम्भसा ।
शिवेन पुण्येन मही निर्वाणमगमत्परम् ॥
तेन रोधेन संछन्ना पयसा वर्षता धरा ।
एकार्णवजलीभूता सर्वसत्त्वविवर्जिता ॥
महासत्त्वान्यपि विभुं प्रविष्टान्यमितौजसम् ।
नष्टार्कपवनाकाशे सूक्ष्मे जगति संवृते ॥
संशोष्यमात्मना कृत्वा समुद्रानपि देहिनः ।
दग्ध्वा सम्प्लाव्य च तथा स्वपित्येकः सनातनः ॥
पौराणं रूपमास्थाय स्वपित्यमितविक्रमः ।
एकार्णवजलव्यापी योगी योगमुपाश्रितः ॥
अनेकानि सहस्राणि युगान्येकार्णवाम्भसि ।
न चैनं कश्चिदव्यक्तं व्यक्तं वेदितुमर्हति ॥
कश्चैष पुरुषो नाम कियोगः कश्च योगवान् ।
असौ कियन्तं कालं च एकार्णवविधिं प्रभुः ।
करिष्यतीति भगवानिति कश्चिन्न बुध्यते ॥
न द्रष्टा नैव गमिता न ज्ञाता नैव पार्श्वगः ।
तस्य न ज्ञायते किंचित्तमृते देवसत्तमम् ॥
नभः क्षितिं पवनमपः प्रकाशं
प्रजापतिं भुवनधरं सुरेश्वरम् ।
पितामहं श्रुतिनिलयं महामुनिं
प्रशाम्य भूयः शयनं ह्यरोचयत् ॥
एवमेकार्णवीभूते शेते लोके महाद्युतिः ।
प्रच्छाद्य सलिलेनोर्वीं हंसो नारायणस्तदा ॥
महतो रजसो मध्ये महार्णवसरस्सु वै ।

विरजस्कं महाबाहुमक्षयं ब्रह्म यद्विदुः ।।
आत्मरूपप्रकाशेन तमसा संवृतः प्रभुः ।
मनः सात्त्विकमाधाय यत्र तत्सत्यमासत ।।
याथातथ्यं परं ज्ञानं भूतं तद्ब्रह्मणा पुरा ।
रहस्यारण्यकोद्दिष्टं यच्चौपनिषदं स्मृतम् ।।
पुरुषो यज्ञ इत्येतद्यत्परं परिकीर्तितम् ।
यश्चान्यः पुरुषाख्यः स्यात्स एष पुरुषोत्तमः ।।
ये च यज्ञकरा विप्रा ये चर्त्विज इति स्मृताः ।
अस्मादेव पुरा भूता यज्ञेभ्यः श्रूयतां तथा ।।
ब्रह्माणं प्रथमं वक्त्रादुद्गातारं च सामगम् ।
होतारमपि चाध्वर्युं बाहुभ्यामसृजत्प्रभुः ।।
ब्रह्मणो ब्राह्मणाच्छंसि प्रस्तोतारं च सर्वशः ।
तौ मित्रावरुणौ पृष्ठात्प्रतिप्रस्तारमेव च ।।
उदरात्प्रतिहर्तारं पोतारं चैव पार्थिव ।
अच्छावाकमथोरुभ्यां नेष्टारं चैव पार्थिव ।।
पाणिभ्यामथ चाग्नीध्रं सुब्रह्मण्यं च जानुतः ।
ग्रावस्तुतं तु पादाभ्यामुन्नेतारं च याजुषम् ।।
एवमेवैष भगवान्षोडशैव जगत्पतिः ।
प्रवक्तॄन्सर्वयज्ञानामृत्विजोऽसृजदुत्तमान् ।।
तदेष वै वेदमयः पुरुषो यज्ञसंज्ञितः ।
वेदाश्चैतन्मयाः सर्वे साङ्गोपनिषदक्रियाः ।।
स्वपित्येकार्णवे चैव यदाश्चर्यमभूत्पुरा ।
श्रूयतां तद्यथा विप्रा मार्कण्डेयकुतूहलम् ।।
गीर्णो भगवतस्तस्य कुक्षावेव महामुनिः ।
बहुवर्षसहस्रायुस्तस्यैव वरतेजसा ।।
अटंस्तीर्थप्रसङ्गेन पृथिवीं तीर्थगोचराम् ।
आश्रमाणि च पुण्यानि देवतायतनानि च ।।
देशान्राष्ट्राणि चित्राणि पुराणि विविधानि च ।
जपहोमपरः शान्तस्तपो घोरं समास्थितः ।।
मार्कण्डेयस्ततस्तस्य शनैर्वक्त्राद्विनिःसृतः ।

स निष्क्रामन्न चात्मानं जानीते देवमायया ।।
निष्क्रम्याप्यस्य वदनादेकार्णवमथो जगत् ।
सर्वतस्तमसाच्छन्नं मार्कण्डेयोऽन्ववैक्षत ।।
तस्योत्पन्नं भयं तीव्रं संशयश्चात्मजीविते ।
देवदर्शनसंहृष्टो विस्मयं परमं गतः ।।
चिन्तयञ्जलमध्यस्थो मार्कण्डेयो विशङ्कित ।
किं नु स्यान्मम चिन्तेयं मोहः स्वप्नोऽनुभूयते ।।
व्यक्तमन्यतमो भावस्तेषां संभावितो मम ।
न हीदृशं जगत्क्लेशमयुक्तं सत्यमर्हति ।।
नष्टचन्द्रार्कपवने नष्टपर्वतभूतले ।
कतमः स्यादयं लोक इति चिन्तामवस्थित ।।
ददर्श चापि पुरुषं स्वपन्तं पर्वतोपमम् ।
सलिलेऽर्धमथो मग्नं जीमूतमिव सागरे ।।
ज्वलन्तमिव तेजोभिर्गोयुक्तमिव भास्करम् ।
शर्वर्यां जाग्रतमिव भासन्तं स्वेन तेजसा ।।
देवं द्रष्टुमिहायात. को भवानिति विस्मयात् ।
तथैव स मुनि. कुक्षिं पुनरेव प्रवेशितः ।।
संप्रविष्ट. पुन. कुक्षिं मार्कण्डेयोऽतिविस्मय. ।
तथैव तु पुनर्भूयो विजानन्स्वप्नदर्शनम् ।।
स तथैव यथापूर्वं यो धरामटते पुरा ।
पुण्यतीर्थजलोपेता विविधान्याश्रमाणि च ।।
क्रतुभिर्यजमानाश्च समाप्तवरदक्षिणान् ।
अपश्यद्देवकुक्षिस्थान्याजकाञ्छतशो द्विजान् ।।
सद्वृत्तमास्थिता. सर्वे वर्णा ब्राह्मणपूर्वका· ।
चत्वारश्चाश्रमा सम्यग्यथोद्दिष्टा. मया तव ।।
एवं वर्षशतं साग्रं मार्कण्डेयस्य धीमत ।
चरत पृथिवीं सर्वां न कुक्ष्यन्त. समीक्षित ।।
तत कदाचिदथ वै पुनर्वक्त्राद्विनि सृत. ।
सुप्तं न्यग्रोधशाखायां बालमेकं निरैक्षत ।।
तथैवैकार्णवजले नीहारेणावृताम्बरे ।

अव्यग्र. क्रीडते लोके सर्वभूतविवर्जिते ।।
स मुनिर्विस्मयाविष्ट कौतूहलसमन्वित ।
बालमादित्यसकाश नाशक्नोदभिवीक्षितुम् ।।
स चिन्तयस्तथैकान्ते स्थित्वा सलिलसंनिधौ ।
पूर्वदृष्टमिदं मेने शङ्कितो देवमायया ।।
अगाधसलिले तस्मिन्मार्कण्डेय. सविस्मय ।
प्लवंस्तथार्तिमगमद्भयात्सत्रस्तलोचन ।।
स तस्मै भगवानाह स्वागत बालयोगवान् ।
बभाषे मेघतुल्येन स्वरेण पुरुपोत्तम ।।
मा भैर्वत्स न भेतव्यमिहैवायाहि मेऽन्तिकम् ।
मार्कण्डेयो मुनिस्त्वाह बाल त श्रमपीडित ।।

मार्कण्डेय उवाच ।

को मां नाम्ना कीर्तयति तप परिभवन्मम ।
दिव्यं वर्षसहस्राख्य धर्षयन्निव मे वय ।।
न ह्येष व समाचारो देवेष्वपि ममोचित ।
मा ब्रह्मापि हि देवेशो दीर्घायुरिति भाषते ।।
कस्तमो घोरमासाद्य मामद्य त्यक्तजीवित. ।
मार्कण्डेयेति मामुक्त्वा मृत्युमीक्षितुमर्हति ।।

सूत उवाच ।

एवमाभाष्य त (-भाषत?) क्रोधान्मार्कण्डेयो महामुनि ।
तथैव भगवान्भूयो बभाषे मधुसूदन. ।।

श्रीभगवानुवाच ।

अहं ते जनको वत्स हृषीकेश पिता गुरु ।
आयुष्प्रदाता पौराण किं मा त्व नोपसर्पसि ।।
मा पुत्रकाम प्रथम पिता तेऽङ्गिरसो मुनि ।
पूर्वमाराधयामास तपस्तीव्र समाश्रित ।।
ततस्त्वा घोरतपसा प्रावृणोदमितौजसम् ।

उक्तवानहमात्मस्थं महर्षिममितौजसम् ॥
क. समुत्सहते चान्यो यो न भूतात्मकात्मजः ।
द्रष्टुमेकार्णवगत क्रीडन्त योगवर्त्मना ॥
तत. प्रहृष्टवदनो विस्मयोत्फुल्ललोचनः ।
मूर्ध्नि बद्धाञ्जलिपुटो मार्कण्डेयो महातपाः ॥
नामगोत्रे तत. प्रोच्य दीर्घायुर्लोकपूजित. ।
तस्मै भगवते भक्त्या नमस्कारमथाकरोत् ॥

मार्कण्डेय उवाच ।

इच्छेय तत्त्वतो मायामिमा ज्ञातु तवानघ ।
यदेकार्णवमध्यस्थः शेषे त्व बालरूपवान् ॥
किसज्ञश्चैव भगवाँल्लोके विज्ञायसे प्रभो ।
तर्कये त्वा महात्मान को ह्यन्यः स्थातुमर्हति ॥

श्रीभगवानुवाच ।

अह नारायणो ब्रह्मन्सर्वभूतविनाशन. ।
अह सहस्रशीर्षाख्यो य. पदैरभिसंज्ञितः ॥
आदित्यवर्णः पुरुषो मखे ब्रह्ममयो मख. ।
अहमग्निर्हव्यवाहो यादसा पतिरव्ययः ॥
अहमिन्द्रपदे शक्रो वर्षाणां परिवत्सर. ।
अह योगी युगाख्यस्य युगान्तावर्त एव च ॥
अह सर्वाणि सत्त्वानि दैवतान्यखिलानि तु ।
भुजगानामह शेषस्तार्क्ष्यो वै सर्वपक्षिणाम् ॥
कृतान्त. सर्वभूताना विश्वेषा कालसज्ञितः ।
अह धर्मस्तपश्चाह सर्वाश्रमनिवासिनाम् ॥
अह चैव सरिद्दिव्या क्षीरोदश्च महार्णव ।
यत्तत्सत्य च परममहमेक प्रजापति. ॥
अह साख्यमह योगोऽप्यह तत्परम पदम् ।
अहमिज्या क्रिया चाहमह विद्याधिपः स्मृत ॥
अहं ज्योतिरह वायुरह भूमिरहं नभ· ।

प्रहृष्टनानाविधपक्षिसेवित
प्रमत्तहारीतकुलोपनादितम् ।।
मृगेन्द्रनादाकुलसत्त्वमानसै.
क्वचित्क्वचिद्द्वन्द्वकदम्बकैर्मृगै ।
प्रफुल्लनानाविधचारुपङ्कजै:
सरस्तडागैरुपशोभित क्वचित् ।।
निविडनिचुलनील नीलकण्ठाभिराम
मदमुदितविहगव्रातनादाभिरामम् ।
कुसुमिततरुशाखालीनमत्तद्विरेफ
नवकिसलयशोभाशोभितप्रान्तशाखम् ।।
क्वचिच्च दन्तिक्षतचारुवीरुधं
क्वचिल्लतालिङ्गितचारुवृक्षकम् ।
क्वचिद्विलासालसगामिबर्हिण
निषेवित किपुरुषव्रजै क्वचित् ।।
पारावतध्वनिविकूजितचारुशृङ्गै-
रभ्रकषै सितमनोहरचारुरूपै. ।
आकीर्णपुष्पनिकुरम्बविमुक्तहासै-
र्विभ्राजित त्रिदशदेवकुलैरनेकै: ।।
फुल्लोत्पलागुरुसहस्रवितानयुक्तै-
स्तोयाशयै. समनुशोभितदेयमार्गम् ।
मार्गान्तरागलितपुष्पविचित्रभक्ति-
सबद्धगुल्मविटपैर्विहगैरुपेतम् ।।
तुङ्गाग्रैर्नीलपुष्पस्तबकभरनतप्रान्तशाखैरशोकै-
र्मत्तालिव्रातगीतश्रुतिसुखजननैर्भासितान्तर्मनोज्ञै. ।
रात्रौ चन्द्रस्य भासा कुसुमिततिलकैरेकता सप्रयातं
छायासुप्तप्रबुद्धस्थितहरिणकुलालुप्तदर्भाङ्कुराग्रम् ।।
हंसाना पक्षपातप्रचलितकमलस्वच्छविस्तीर्णतोय
तोयाना तीरजातप्रविकचकदलीवाटनृत्यन्मयूरम् ।
मायूरै. पक्षचन्द्रै क्वचिदपि पतितै रञ्जितक्ष्माप्रदेश
देशे देशे विकीर्णप्रमुदितविलसन्मत्तहारीतवृक्षम् ।।

उक्तवानहमात्मस्थ महर्षिममितौजसम् ।।
कः समुत्सहते चान्यो यो न भूतात्मकात्मज· ।
द्रष्टुमेकार्णवगतं क्रीडन्त योगवर्त्मना ।।
तत. प्रहृष्टवदनो विस्मयोत्फुल्ललोचनः ।
मूर्ध्नि बद्धाञ्जलिपुटो मार्कण्डेयो महातपाः ।।
नामगोत्रे तत. प्रोच्य दीर्घायुर्लोकपूजितः ।
तस्मै भगवते भक्त्या नमस्कारमथाकरोत् ।।

मार्कण्डेय उवाच ।

इच्छेय तत्त्वतो मायामिमा ज्ञातु तवानघ ।
यदेकार्णवमध्यस्थः शेषे त्व बालरूपवान् ।।
किसज्ञश्चैव भगवाँल्लोके विज्ञायसे प्रभो ।
तर्कये त्वा महात्मानं को ह्यन्यः स्थातुमर्हति ।।

श्रीभगवानुवाच ।

अह नारायणो ब्रह्मन्सर्वभूतविनाशन. ।
अह सहस्रशीर्षाख्यो य पदैरभिसंज्ञित· ।।
आदित्यवर्ण. पुरुषो मखे ब्रह्ममयो मख. ।
अहमग्निर्हव्यवाहो यादसा पतिरव्ययः ।।
अहमिन्द्रपदे शक्रो वर्षाणा परिवत्सरः ।
अह योगी युगाख्यस्य युगान्तावर्त एव च ।।
अह सर्वाणि सत्त्वानि दैवतान्यखिलानि तु ।
भुजगानामह शेषस्तार्क्ष्यो वै सर्वपक्षिणाम् ।।
कृतान्त· सर्वभूताना विश्वेषा कालसज्ञितः ।
अह धर्मस्तपश्चाह सर्वाश्रमनिवासिनाम् ।।
अहं चैव सरिद्दिव्या क्षीरोदश्च महार्णव ।
यत्तत्सत्य च परममहमेक· प्रजापतिः ।।
अह साख्यमह योगोऽप्यह तत्परम पदम् ।
अहमिज्या क्रिया चाहमह विद्याधिपः स्मृत ।।
अह ज्योतिरह वायुरह भूमिरह नभः ।

अहमाप समुद्राश्च नक्षत्राणि दिशो दश ।।
अह वर्षमह सोम पर्जन्योऽहमहं रवि ।
क्षीरोदसागरे चाह समुद्रे वडवामुख ।।
वह्नि सवर्तको भूत्वा पिबस्तोयमय हवि ।
अह पुराण· परम तथैवाह परायणम् ।।
अह भूतस्य भव्यस्य वर्तमानस्य सभव. ।
यत्किंचित्पश्यसे विप्र यच्छृणोषि च किचन ।।
यल्लोके चानुभवसि तत्सर्वं मामनुस्मर ।
विश्व सृष्ट मया पूर्वं सृज्य चाद्यापि पश्य माम् ।।
युगे युगे च स्रक्ष्यामि मार्कण्डेयाखिल जगत् ।
तदेतदखिलं सर्वं मार्कण्डेयावधारय ।।
शुश्रूषुर्मम धर्मांश्च कुक्षौ चर सुख मम ।
मम ब्रह्मा शरीरस्थो देवैश्च ऋषिभि. सह ।।
व्यक्तमव्यक्तयोग मामवगच्छासुरद्विषम् ।
अहमेकाक्षरो मन्त्रस्त्र्यक्षरश्चैव तारक ।।
परस्त्रिवर्गादोकारस्त्रिवर्गार्थनिदर्शन ।
एवमादिपुराणेशो वदन्नेव महामति. ।।
वक्त्रमाहृतवानाशु मार्कण्डेय महामुनिम् ।
ततो भगवत कुक्षि प्रविष्टो मुनिसत्तम ।
स तस्मिन्सुखमेकान्ते शुश्रूषुर्हंसमव्ययम् ।।
योऽहमेव विविधतनु परिश्रितो
महार्णवे व्यपगतचन्द्रभास्करे ।
शनैश्चरन्प्रभुरपि हससज्ञितो-
ऽसृजज्जगद्विहरति कालपर्यये ।।

# वाराणस्युद्यानवर्णनम्

(मत्स्यपु० १८०)

निर्जगाम च देवेशः पार्वत्या सह शंकरः ।
उद्यानं दर्शयामास देव्या देवः पिनाकधृक् ॥

देवदेव उवाच ।

प्रोत्फुल्लनानाविधगुल्मशोभितं
लताप्रतानावनतं मनोहरम् ।
विरूढपुष्पैः परितः प्रियङ्गुभिः
सुपुष्पितैः कण्टकितैश्च केतकैः ॥
तमालगुल्मैर्निचितं सुगन्धिभिः
सकर्णिकारैर्बकुलैश्च सर्वशः ।
अशोकपुंनागवरैः सुपुष्पितै-
र्द्विरेफमालाकुलपुष्पसंचयैः ॥
क्वचित्प्रफुल्लाम्बुजरेणुरूषितै-
र्विहंगमैश्चारुकलप्रणादिभिः ।
विनादितं सारसमण्डनादिभिः
प्रमत्तदात्यूहरुतैश्च वल्गुभिः ॥
क्वचिच्च चक्राह्वरवोपनादितं
क्वचिच्च कादम्बकदम्बकैर्युतम् ।
क्वचिच्च कारण्डवनादनादितं
क्वचिच्च मत्तालिकुलाकुलीकृतम् ॥
मदाकुलाभिस्त्वमराङ्गनादिभि-
र्निषेवितं चारुसुगन्धिपुष्पम् ।
क्वचित्सुपुष्पैः सहकारवृक्षै-
र्लतोपगूढैस्तिलकद्रुमैश्च ॥
प्रगीतविद्याधरसिद्धचारणं
प्रवृत्तनृत्याप्सरसां गणाकुलम् ।

प्रहृष्टनानाविधपक्षिसेवितं
प्रमत्तहारीतकुलोपनादितम् ।।
मृगेन्द्रनादाकुलसत्त्वमानसै.
क्वचित्क्वचिद्द्वन्द्वकदम्बकैर्मृगै ।
प्रफुल्लनानाविधचारुपङ्कजैः
सरस्तडागैरुपशोभित क्वचित् ।।
निविडनिचुलनील नीलकण्ठाभिराम
मदमुदितविहगव्रातनादाभिरामम् ।
कुसुमिततरुशाखालीनमत्तद्विरेफ
नवकिसलयशोभाशोभितप्रान्तशाखम् ।।
क्वचिच्च दन्तिक्षतचारुवीरुध
क्वचिल्लतालिङ्गितचारुवृक्षकम् ।
क्वचिद्विलासालसगामिबर्हिण
निषेवित किंपुरुषव्रजै क्वचित् ।।
पारावतध्वनिविकूजितचारुशृङ्गै-
रभ्रंकषै सितमनोहरचारुरूपैः ।
आकीर्णपुष्पनिकुरम्बविमुक्तहासै-
र्विभ्राजित त्रिदशदेवकुलैरनेकैः ।।
फुल्लोत्पलागुरुसहस्रवितानयुक्तै-
स्तोयाशयै. समनुशोभितदेवमार्गम् ।
मार्गान्तरागलितपुष्पविचित्रभक्ति-
सवद्धगुल्मविटपैर्विहगैरुपेतम् ।।
तुङ्गाग्रैर्नीलपुष्पस्तबकभरनतप्रान्तशाखैरशोकै-
र्मत्तालिव्रातगीतश्रुतिसुखजननैर्भासितान्तर्मनोज्ञै ।
रात्रौ चन्द्रस्य भासा कुसुमिततिलकैरेकता सप्रयात
छायासुप्तप्रबुद्धस्थितहरिणकुलालुप्तदर्भाङ्कुराग्रम् ।।
हसाना पक्षपातप्रचलितकमलस्वच्छविस्तीर्णतोय
तोयाना तीरजातप्रविकचकदलीवाटनृत्यन्मयूरम् ।
मायूरै पक्षचन्द्रै क्वचिदपि पतितै रञ्जितक्ष्माप्रदेश
देशे देशे विकीर्णप्रमुदितविलसन्मत्तहारीतवृक्षम् ।।

सारङ्गैः क्वचिदपि सेवितप्रदेशं
सच्छन्नं कुसुमचयैः क्वचिद्विचित्रैः ।
हृष्टाभिः क्वचिदपि किंनराङ्गनाभिः
क्षीबाभिः समधुरगीतवृक्षखण्डम् ।।
संसृष्टैः क्वचिदुपलिप्तकीर्णपुष्पै-
रावासैः परिवृतपादपं मुनीनाम् ।
आमूलात्फलनिचितैः क्वचिद्विशालै-
रुत्तुङ्गैः पनसमहीरुहैरुपेतम् ।।
फुल्लातिमुक्तकलतागृहसिद्धलील
सिद्धाङ्गनाकनकनूपुरनादरम्यम् ।
रम्यप्रियङ्गुतरुमञ्जरिसक्तभृङ्ग
भृङ्गावलीस्खलितचारुकदम्बपुष्पम् ।।
पुष्पोत्करानिलविघूर्णितपादपाग्र-
मग्रेसरैर्भुवि निपातितवंशगुल्मम् ।
गुल्मान्तरप्रसृतभीतमृगीसमूहं
संमुह्यतां तनुभृतामपवर्गदात् ।।
चन्द्रांशुजालधवलैस्तिलकैर्मनोज्ञैः
सिन्दूरकुङ्कुमकुसुम्भनिभैरशोकैः ।
चामीकरप्रतिसमैरथ कर्णिकारैः
फुल्लारविन्दरचितं सुविशालशाखैः ।।
क्वचिद्रजतपर्णाभैः क्वचिद्विद्रुमसंनिभैः ।
क्वचित्काञ्चनसंकाशैः पुष्पैराचितभूतलम् ।।
पुंनागेषु द्विजगणविरुतं
रक्ताशोकस्तबकभरनमितम् ।
रम्योपान्तश्रमहरपवनं
फुल्लाब्जेषु भ्रमरविलसितम् ।।
सकलभुवनभर्ता लोकनाथस्तदानीं
तुहिनशिखरिपुत्र्याः सार्धमिष्टैर्गणेशैः ।
विविधतरुविशालं मत्तहृष्टान्यपुष्ट-
मुपवनतरुरम्यं दर्शयामास देव्याः ।।

## मगभोजकब्राह्मणवृत्तान्तः

(भविष्यपु० १।१३९)

साम्ब उवाच।

कोऽय मगेति ते प्रोक्त क्व वासौ वसते विभो।
कस्य पुत्रो द्विजश्रेष्ठ किमाचार किमाकृति ॥

गौरमुख उवाच।

योऽय मगेति वै प्रोक्तो मगो दिव्यो द्विजोत्तम।
निक्षुभाया सुतो वीर आदित्यात्मज उच्यते ॥

साम्ब उवाच।

कथ स निक्षुभापुत्र कथ वीरसुतस्तथा।
कथ चादित्यतनयो मगोऽसावुच्यतेऽनघ ॥

गौरमुख उवाच।

मानुषत्व गता देवी निक्षुभा किल यादव।
गता शापमवाप्येह भास्कराल्लोकपूजिता ॥
गोत्र मिहिरमित्याहुस्तस्मै ब्राह्मण्यमुत्तमम्।
सुजिह्वो नाम धर्मात्मा ऋषिपुत्र पुरानघ ॥
तस्यात्मजा समुत्पन्ना निक्षुभा सा वराङ्गना।
रूपेणाप्रतिमा लोके हारलीला मता तु सा ॥
पितुर्नियोगात्सा कन्या विहरेज्जातवेदसि।
विहरन्ती यथान्याय समिद्धे पावके तथा ॥
अथ ता देवदेवेशो ह्यशुमाली ददर्श ह।
रूपयौवनसपन्ना तत कामवश गत।
चिन्तयामास देवेश कथ ता वै भजाम्यहम् ॥
अनयावहृतो योऽय पावको देवपूजित।

वनमाविश्य तन्वङ्गी भजेय लोकपूजिताम् ।।
इति सचिन्त्य देवेशः सहस्रांशुर्दिवस्पतिः ।
विवेश पावक वीर तत्पुत्रश्चाभवत्तदा ।।
ततो विलासलावण्यरूपयौवनशालिनी ।
समिद्ध लङ्घयित्वाग्नि जगामायतलोचना ।।
क्रुद्धः स्वरूपमास्थाय दृष्ट्वा कन्यां स पीडितः ।
कर करेण सगृह्य ततस्ता हव्यवाहन. ।।
उवाच यदुशार्दूल नोदितो भास्करेण तु ।
वेदोक्त विधिमुत्सृज्य यथाह लङ्घितस्त्वया ।।
तस्मान्मत्तः समुत्पन्नो न च पुत्रो भविष्यति ।
जरशब्द इति ख्यातो वशकीर्तिविवर्धनः ।।
अग्निजात्या मगाः प्रोक्ताः सोमजात्या द्विजातयः ।
भोजकादित्यजात्या हि दिव्यास्ते परिकीर्तिताः ।।
तामेवमुक्त्वा भगवानादित्योऽन्तरितस्तदा ।
अथोत्पन्नां प्रजा ज्ञात्वा ध्यानयोगेन वै ऋषिः ।।
पतित. स्यान्महातेजा ऋग्जिह्व. सुमहामतिः ।
शापमुद्यम्य तेजस्वी ऋग्जिह्वो वाक्यमब्रवीत् ।।
आत्मापराधात्कामिन्या यथा गर्भोऽनलावृतः ।
सभूतस्ते महाभागे अपूज्योऽय भविष्यति ।।
पुत्रशोकाभिसतप्ता बाला पर्याकुलेक्षणा ।
चिन्तयामास दुःखार्ता तमेक ज्वलनाकृतिम् ।।
ततो देववरिष्ठस्य मम योनिसमुद्भवः ।
अय दत्तो महाशापः पूज्यता कर्तुमर्हसि ।।
भवेत्पूज्यो हि मे पुत्रो देवेश्वर तथा कुरु ।
एव चिन्तयमानस्तु भगवानर्यमा किल ।।
आग्नेय रूपमाश्रित्य चेदं वचनमब्रवीत् ।
स्निग्धो गम्भीरनिर्घोषः शान्तो ज्वरविवर्जितः ।।
ऋग्जिह्वः सुमहातेजा धर्मं चरति सुव्रत ।
तेनोत्सृष्ट महाशाप नान्यथा कर्तुमुत्सहे ।।
किंतु कार्यगरीयस्त्वादात्मनो योग्यमुत्तमम् ।

तव पुत्रं विधास्यामि चापूज्य वेदपारगम् ।।
वंशश्च सुमहांस्तस्य निवसिष्यति भूतले ।
ममाङ्गानि महात्मानो वासिष्ठा ब्रह्मवादिन· ।।
मद्‌गायना मद्यजना मद्भक्ता मत्परायणा ।
मम शुश्रूषकाश्चैव मम च व्रतचारिण ।।
त्वा च मा च यथान्याय वेद तत्त्वार्थदर्शिन ।
पूजयिष्यन्ति निरता. सदा मद्भावभाविता· ।।
मत्कर्मणा मदङ्गाना मद्भावविनिवेशनात् ।
विरजा मत्प्रसादेन मामेवैष्यन्त्यसशयम् ।।
जटाश्मश्रुधरा नित्य सदा मयि परायणा ।
पञ्चकालविधानज्ञा वीरकालस्य यज्विन. ।।
पूर्णंक दक्षिणे पाणौ वर्म वामेन धारयन् ।
पतिदानेन वदन प्रच्छाद्य नियत शुचि ।।
प्राणं हि महता कृत्वा ततो भुञ्जीत वाग्यत ।
अयमाच्चाप्रसादाच्च व्याकुलेन्द्रियचेतसा ।।
विधिहीन मन्त्रहीन ये वै यक्ष्यन्ति मामत ।
तेऽपि स्वर्गाच्च्युता क्लान्ता रमन्ते सूर्यसंनिधौ ।।
एवविधास्तव सुता भविष्यन्ति महीतले ।
मगवंशे महात्मानो वेदवेदाङ्गपारगा. ।।
एवमाश्वास्य ता देवी भास्करो वारितस्कर ।
अन्तर्दधे महातेजा सा च हर्षमवाप ह ।।
एवमेते समुत्पन्ना भोजका. कृष्णनन्दन ।
विष्णुभास्ते तथादित्या उत्पन्ना लोकपूजिता ।।
तेषामेतत्पुर देहि पर्याप्तास्ते प्रतिग्रहे ।
त्वदीयस्यास्य मे वीर तथा भास्करपूजने ।।
तस्य गौरमुखस्येद वाक्य श्रुत्वा स यादव ।
साम्बो जाम्ववतीपुत्र. प्रणम्य शिरसोक्तवान् ।।
क्व वसन्ते महात्मान एते भास्करपुत्रका ।
भोजका द्विजशार्दूल येन तानानयाम्यहम् ।।

गौरमुख उवाच ।

नाह जाने महावाहो वसन्ते यत्र वै मगा ।
जानीते तान्रविर्वीर तस्मात्त शरण व्रज ।।
ब्राह्मणेनैवमुक्तस्तु प्रणम्य शिरसा रविम् ।
जगाद भास्कर साम्व. कस्ते पूजां करिष्यति ।।
विज्ञप्तस्त्वेव साम्वेन प्रतिमा तमुवाच ह ।
न योग्या परिचर्यायां जम्बूद्वीपे ममानघ ।।
मम पूजाकर गत्वा शाकद्वीपादिहानय ।
लवणोदात्परे पारे क्षीरोदेन समावृत. ।।
जम्बूद्वीपात्परो यस्माच्छाकद्वीप इति स्मृत. ।
तत्र पुण्या जनपदाश्चतुर्वर्णसमन्विता ।।
मगाश्च मगगाश्चैव गानगा मन्दगास्तथा ।
मगा ब्राह्मणभूयिष्ठा मगगा· क्षत्रिया स्मृता. ।।
वैश्यास्तु गानगा ज्ञेया शूद्रास्तेषा तु मन्दगा ।
न तेषा सकर कश्चिद्धर्माश्रयकृते क्वचित् ।।
धर्मस्यास्य विचारो वा ह्येकत सुखिनः प्रजा· ।
तेजसस्ते मदीयस्य निर्मिता विश्वकर्मणा ।।
तेभ्यो वेदास्तु चत्वार. सरहस्या मयोदिताः ।
वेदोक्तैर्विविधै स्तोत्रै परैर्गुह्यैर्मया कृतै· ।।
ते च ध्यायन्ति मामेव यजन्ते मा च नित्यश. ।
मन्मानसा मद्यजना मद्भक्ता मत्परायणाः ।।
मम शुश्रूषकाश्चैव मम च व्रतचारिण. ।
अव्यङ्गधारिणश्चैव विधिदृष्टेन कर्मणा ।।
कुर्वन्ति ते सदा भद्रा मम पूजा ममानुगा. ।
तथा देवा सगन्धर्वा· सिद्धाश्च सह चारणै· ।
विहरन्ते रमन्ते च दृश्यमानाश्च तैः सह ।।
जम्बूद्वीपे त्वह विष्णुर्वेदवेदाङ्गपूजित ।
शक्रोऽह शाल्मलीद्वीपे क्रौञ्चद्वीपे ह्यह भगः ।।
प्लक्षद्वीपे त्वह भानु. शाकद्वीपे दिवाकर. ।
पुष्करे च स्मृतो ब्रह्मा ततश्चाह महेश्वर· ।।

तान्मगान्मम पूजार्थं शाकद्वीपादिहानय ।
आरुह्य गरुडं साम्ब शीघ्रं गत्वाविचारयन् ।।
तथेति गृह्य तामाज्ञा रवेर्जाम्बवतीसुत. ।
पुनर्द्वारवती गत्वा कान्त्यातीव समन्वित ।।
आख्यातवान्पितु सर्व स्वकीय देवदर्शनम् ।
तस्माच्च गरुड लब्ध्वा ययौ साम्बोऽधिरुह्य तम् ।।
शाकद्वीपमनुप्राप्य सप्रहृष्टतनूरुह ।
तत्रापश्यद्यथोद्दिष्टान्साम्बस्तेजस्विनो मगान् ।।
विवस्वन्त पूजयन्तो धूपदीपादिभिः शुभै. ।
सोऽभिवाद्य च तान्पूर्वं कृत्वाप्येषा प्रदक्षिणाम् ।।
पृष्ट्वा चानामय तेषा प्रशसासामपूर्वकम् ।
यूय हि पुण्यकर्माणो द्रष्टव्यार्थे शुभार्थिन ।
रता येऽर्कस्य पूजाया येषा चैव वरप्रद ।।
तनय वित्त मा विष्णो साम्ब नाम्ना च विश्रुतम् ।
चन्द्रभागातटे चापि मया सूर्यो निवेशित ।।
तेनाहं प्रेपितश्चात्र उत्तिष्ठध्व व्रजामहे ।
ते तमूचुस्तत साम्बमेवमेतन्न सशय ।।
अस्माकमपि देवेन व्याख्यात पूर्वमेव हि ।
अष्टादश कुलानीह मगाना वेदवादिनाम् ।
यास्यन्ति ये त्वया सार्धं यथा देवेन भाषितम् ।।
ततस्तानि दशाष्टौ च कुलानीह समन्तत ।
आरोप्य गरुडे साम्बस्त्वरित पुनरभ्यगात् ।।
सोऽल्पेनैव तु कालेन प्राप्तो मित्रवन तत ।
कृत्वाज्ञा तु रवे साम्ब. कृत्स्न त्वेव न्यवेदयत् ।।
रवि शोभनमित्युक्त्वा प्रसन्न साम्बमब्रवीत् ।
मम पूजाकरा ह्येते प्रजाना शान्तिकारका ।।
मम पूजा करिष्यन्ति विधानोक्ता यदूत्तम ।
तत्कृते न पुनश्चिन्ता तव काचिद्भविष्यति ।।

# सतीदेहत्यागः

(भागवतपु० ४।३–४)

मैत्रेय उवाच।

यदाभिषिक्तो दक्षस्तु ब्रह्मणा परमेष्ठिना।
प्रजापतीनां सर्वेषामाधिपत्ये स्मयोऽभवत्॥
इष्ट्वा स वाजपेयेन ब्रह्मिष्ठानभिभूय च।
बृहस्पतिसवं नाम समारेभे क्रतूत्तमम्॥
तस्मिन्ब्रह्मर्षयः सर्वे देवर्षिपितृदेवताः।
आसन्कृतस्वस्त्ययनास्तत्पत्न्यश्च सभर्तृकाः॥
तदुपश्रुत्य नभसि खेचराणां प्रजल्पताम्।
सती दाक्षायणी देवी पितृयज्ञमहोत्सवम्॥
व्रजन्तीः सर्वतो दिग्भ्य उपदेववरस्त्रियः।
विमानयानाः सप्रेष्ठा निष्ककण्ठीः सुवाससः॥
दृष्ट्वा स्वनिलयाभ्यासे लोलाक्षीर्मृष्टकुण्डलाः।
पतिं भूतपतिं देवमौत्सुक्यादभ्यभाषत॥

सत्युवाच।

प्रजापतेस्ते श्वशुरस्य सांप्रतं
निर्यापितो यज्ञमहोत्सवः किल।
वयं च तत्राभिसराम वाम ते
यद्यर्थितामी विबुधा व्रजन्ति हि॥
तस्मिन्भगिन्यो मम भर्तृभिः स्वकै-
र्ध्रुवं गमिष्यन्ति सुहृद्दिदृक्षवः।
अहं च तस्मिन्भवताभिकामये
सहोपनीतं परिबर्हमर्हितुम्॥
तत्र स्वसॄर्मे ननु भर्तृसंमिता
मातृष्वसॄः क्लिन्नधियं च मातरम्।

द्रक्ष्ये चिरोत्कण्ठमना महर्षिभि-
रुन्नीयमान च मृडाध्वरध्वजम् ।।
त्वय्येतदाश्चर्यमजात्ममायया
विनिर्मितं भाति गुणत्रयात्मकम् ।
तथाप्यह योषिदतत्त्वविच्च ते
दीना दिदृक्षे भव मे भवक्षितिम् ।।
पश्य प्रयान्तीरभवान्ययोषितो-
ऽप्यलंकृताः कान्तसखा वरूथश ।
यासां व्रजद्भि शितिकण्ठ मण्डित
नभो विमानै. कलहसपाण्डुभि ।।
कथं सुताया पितृगेहकौतुक
निशम्य देह सुरवर्य नेङ्गते ।
अनाहुता अप्यभियन्ति सौहृद
भर्तुर्गुरोर्देहकृतश्च केतनम् ।।
तन्मे प्रसीदेदममर्त्य वाञ्छित
कर्तुं भवान्कारुणिको बतार्हति ।
त्वयात्मनोऽर्धेऽहमदभ्रचक्षुषा
निरूपिता मानुगृहाण याचित ।।

ऋषिरुवाच ।

एव गिरित्र· प्रिययाभिभाषित
प्रत्यभ्यधत्त प्रहसन्सुहृत्प्रिय· ।
सस्मारितो मर्मभिद कुवागिषून्
यानाह को विश्वसृजा समक्षत ।।

श्रीभगवानुवाच ।

त्वयोदित शोभनमेव शोभने
अनाहुता अप्यभियन्ति बन्धुपु ।
ते यद्यनुत्पादितदोषदृष्टयो
बलीयसानात्म्यमदेन मन्युना ।।

विद्यातपोवित्तवपुर्वय कुलै
सता गुणै षड्भिरसत्तमेतरै ।
स्मृतौ हताया भृतमानदुर्दृश
स्तब्धा न पश्यन्ति हि धाम भूयसाम् ।।
नैतादृशाना स्वजनव्यपेक्षया
गृहान्प्रतीयादनवस्थितात्मनाम् ।
येऽभ्यागतान्वक्रधियाभिचक्षते
आरोपितभ्रूभिरमर्षणाक्षिभि. ।।
तथारिभिर्न व्यथते शिलीमुखै
शेतेऽर्दिताङ्गो हृदयेन दूयता ।
स्वाना यथा वक्रधिया दुरुक्तिभि-
र्दिवानिश तप्यति मर्मताडित ।।
व्यक्त त्वमुत्कृष्टगतेः प्रजापते
प्रियात्मजानामसि सुभ्रु मे मता ।
तथापि मान न पितुः प्रपत्स्यसे
मदाश्रयात्क परितप्यते यत ।।
पापच्यमानेन हृदातुरेन्द्रिय
समृद्धिभिः पूरुषबुद्धिसाक्षिणाम् ।
अकल्प एषामधिरोढुमञ्जसा
पर पदं द्वेष्टि यथासुरा हरिम् ।।
प्रत्युद्गमप्रश्रयणाभिवादन
विधीयते साधु मिथ. सुमध्यमे ।
प्राज्ञै परस्मै पुरुषाय चेतसा
गुहाशयायैव न देहमानिने ।।
सत्त्व विशुद्ध वसुदेवशब्दित
यदीयते तत्र पुमानपावृत. ।
सत्त्वे च तस्मिन्भगवान्वासुदेवो
ह्यधोक्षजो मे नमसा विधीयते ।।
तत्ते निरीक्ष्यो न पितापि देहकृ-
द्दक्षो मम द्विट् तदनुव्रताश्च ये ।

यो विश्वसृग्यज्ञगत वरोरु मा-
मनागस दुर्वचसाकरोत्तिर. ।।
यदि व्रजिष्यस्यतिहाय मद्वचो
भद्र भवत्या न ततो भविष्यति ।
सभावितस्य स्वजनात्पराभवो
यदा स सद्यो मरणाय कल्पते ।।

मैत्रेय उवाच ।

एतावदुक्त्वा विरराम शकर
पत्न्यङ्गनाश ह्युभयत्र चिन्तयन् ।
सुहृद्दिदृक्षु. परिशङ्किता भवा-
न्निष्क्रामती निर्विशती द्विधास सा ।।
सुहृद्दिदृक्षाप्रतिघातदुर्मना.
स्नेहाद्रुदत्यश्रुकलातिविह्वला ।
भव भवान्यप्रतिपूरुष रुषा
प्रधक्ष्यतीवैक्षत जातवेपथु ।।
ततो विनिश्वस्य सती विहाय त
शोकेन रोपेण च दूयता हृदा ।
पित्रोरगात्स्त्रैण्यविमूढधीर्गृहान्
प्रेम्णात्मनो योऽर्धमदात्सता प्रिय ।।
तामन्वगच्छन्द्रुतविक्रमा सती-
मेका त्रिनेत्रानुचरा सहस्रश ।
सपार्षदयक्षा मणिमन्मदादय.
पुरोवृषेन्द्रास्तरसा गतव्यथा. ।।
ता शारिकाकन्दुकदर्पणाम्बुजै.
श्वेतातपत्रव्यजनस्रगादिभि ।
गीतायनैर्दुन्दुभिशङ्खवेणुभि-
र्वृषेन्द्रमारोप्य विटङ्किता ययु ।।
आब्रह्मघोषोर्जितयज्ञवैशस
विप्रर्षिजुष्ट विबुधैश्च सर्वश ।

मृद्दार्वय काञ्चनदर्भचर्मभि-
र्निसृष्टभाण्ड यजन समाविशत् ।।
तामागता तत्र न कश्चनाद्रिय-
द्विमानिता यज्ञकृतो भयाज्जन. ।
ऋते स्वसॄर्वै जननी च सादरा.
प्रेमाश्रुकण्ठ्य परिपस्वजुर्मुदा ।।
सौदर्यसप्रश्नसमर्थवार्तया
मात्रा च मातृष्वसृभिश्च सादरम् ।
दत्ता सपर्या वरमासन च ांसा
नादत्त पित्राप्रतिनन्दिता सती ।।
अरुद्रभाग तमवेक्ष्य चाध्वर
पित्रा च देवे कृतहेलनं विभौ ।
अनादृता यज्ञसदस्यधीश्वरी
चुकोप लोकानिव धक्ष्यती रुषा ।।
जगर्ह सामर्षविपन्नया गिरा
शिवद्विष धूमपथश्रमस्मयम् ।
स्वतेजसा भूतगणान्समुत्थितान्
निगृह्य देवी जगतोऽभिश्रृण्वत· ।।

देव्युवाच ।

न यस्य लोकेऽस्त्यतिशायन· प्रिय-
स्तथाप्रियो देहभृता प्रियात्मनः ।
तस्मिन्समस्तात्मनि मुक्तवैरके
ऋते भवन्तं कतमः प्रतीपयेत् ।।
दोषान्परेषा हि गुणेषु साधवो
गृह्णन्ति केचिन्न भवादृशा द्विज ।
गुणांश्च फल्गून्बहुलीकरिष्णवो
महत्तमास्तेष्वविदद्भवानघम् ।।
नाश्चर्यमेतद्यदसत्सु सर्वदा
महद्विनिन्दा कुणपात्मवादिषु ।

सेर्ष्यं महापूरुषपादपांसुभि-
र्निरस्ततेज सु तदेव शोभनम् ।।
यद्द्व्यक्षरं नाम गिरेरित नृणा
सकृत्प्रसङ्गादघमाशु हन्ति तत् ।
पवित्रकीर्तिं तमलङ्घ्यशासन
भवानहो द्वेष्टि शिव शिवेतर. ।।
यत्पादपद्म महता मनोऽलिभि-
र्निषेवित ब्रह्मरसासवार्थिभिः ।
लोकस्य यद्वर्षति चाशिषोऽर्थिन-
स्तस्मै भवान्द्रुह्यति विश्वबन्धवे ।।
कि वा शिवाख्यमशिव न विदुस्त्वदन्ये
ब्रह्मादयस्तमवकीर्य जटा· श्मशाने ।
तन्माल्यभस्मनृकपाल्यवसत्पिशाचै-
र्ये मूर्धभिर्दधति तच्चरणावसृष्टम् ।।
कर्णौ पिधाय निरियाद्यदकल्प ईशे
धर्मावितर्यसृणिभिर्नृभिरस्यमाने ।
छिन्द्यात्प्रसह्य रुशतीमसता प्रभुश्चे-
ज्जिह्वामसूनपि ततो विसृजेत्स धर्म ।।
अतस्तवोत्पन्नमिद कलेवर
न धारयिष्ये शितिकण्ठगर्हिण ।
जग्धस्य मोहाद्धि विशुद्धिमन्धसो
जुगुप्सितस्योद्धरण प्रचक्षते ।।
न वेदवादाननुवर्तते मति.
स्व एव लोके रमतो महामुने ।
यथा गतिर्देवमनुष्ययो पृथक्
स्व एव धर्मे न पर क्षिपेत्स्थित ।।
कर्म प्रवृत्त च निवृत्तमप्यृत
वेदे विविच्योभयलिङ्गमाश्रितम् ।
विरोधि तद्यौगपदैककर्तरि
द्वय तथा ब्रह्मणि कर्म नर्च्छति ।।

मा व पदव्य पितरस्मदास्थिता
या यज्ञशालासु न धूमवर्त्मभि. ।
तदन्नतृप्तैरसुभृद्भिरीडिता
अव्यक्तलिङ्गा अवधूतसेविता ॥
नैतेन देहेन हरे कृतागसो
देहोद्भवेनालमलं कुजन्मना ।
व्रीडा ममाभूत्कुजनप्रसङ्गत-
स्तज्जन्म धिग्यो महतामहृद्यकृत् ॥
गोत्र त्वदीय भगवान्वृषध्वजो
दाक्षायणीत्याह यदा सुदुर्मना ।
व्यपेतनर्मस्मितमाशु तद्ध्यहं
व्युत्स्रक्ष्य एतत्कुणप त्वदङ्गजम् ॥

मैत्रेय उवाच ।

इत्यध्वरे दक्षमनूद्य शत्रुहन्
क्षितावुदीची निषसाद शान्तवाक् ।
स्पृष्ट्वा जल पीतदुकूलसंवृता
निमील्य दृग्योगपथ समाविशत् ॥
कृत्वा समानावनिलौ जितासना
सोदानमुत्थाप्य च नाभिचक्रत ।
शनैर्हृदि स्थाप्य धियोरसि स्थित
कण्ठाद्भ्रुवोर्मध्यमनिन्दितानयत् ॥
एव स्वदेह महता महीयसा
मुहु समारोपितमङ्कमादरात् ।
जिहासती दक्षरुषा मनस्विनी
दधार गात्रेष्वनिलाग्निधारणाम् ॥
तत स्वभर्तुश्चरणाम्बुजासव
जगद्गुरोश्चिन्तयती न चापरम् ।
ददर्श देहो हतकल्मष. सती
सद्य प्रजज्वाल समाधिजाग्निना ॥

तत्पश्यता खे भुवि चाद्भुत मह-
द्धा हेति वादः सुमहानजायत।
हन्त प्रिया दैवतमस्य देवी
जहावसून्केन सती प्रकोपिता ।।
अहो अनात्म्य महदस्य पश्यत
प्रजापतेर्यस्य चराचर प्रजा ।
जहावसून्यद्विमतात्मजा सती
मनस्विनी मानमभीक्ष्णमर्हति ।।
सोऽय दुर्मर्षहृदयो ब्रह्मध्रुक्च
लोके च कीर्तिमसतीमवाप्स्यति।
यदङ्गजा स्वा पुरुषद्विड्वुद्यता
न प्रत्यषेधन्मृतयेऽपराधत ।।
वदत्येव जने सत्या दृष्ट्वासुत्यागमद्भुतम्।
दक्ष तत्पार्षदा हन्तुमुदतिष्ठन्नुदायुधा ।।
तेषामापतता वेग निशाम्य भगवान्भृगु.।
यज्ञघ्नघ्नेन यजुषा दक्षिणाग्नौ जुहाव ह ।।
अध्वर्युणा हूयमाने देवा उत्पेतुरोजसा।
ऋभवो नाम तपसा सोम प्राप्ता· सहस्रश ।।
तैरलातायुधै सर्वे प्रमथा सहगुह्यका ।
हन्यमाना दिशो भेजुरुशद्भिर्ब्रह्मतेजसा ।।

# गोपीगीतम्

(भागवतपु० १०।३१)

गोप्य ऊचुः।

जयति तेऽधिकं जन्मना व्रजः
श्रयत इन्दिरा शश्वदत्र हि।
दयित दृश्यतां दिक्षु तावका-
स्त्वयि धृतासवस्त्वां विचिन्वते॥
शरदुदाशये साधुजातस-
त्सरसिजोदरश्रीमुषा दृशा।
सुरतनाथ तेऽशुल्कदासिका
वरद निघ्नतो नेह किं वधः॥
विषजलाप्ययाद्व्यालराक्षसा-
द्वर्षमारुताद्वैद्युतानलात्।
वृषमयात्मजाद्विश्वतो भया-
दृषभ ते वयं रक्षिता मुहुः॥
न खलु गोपिकानन्दनो भवा-
नखिलदेहिनामन्तरात्मदृक्।
विखनसार्थितो विश्वगुप्तये
सख उदेयिवान्सात्वतां कुले॥
विरचिताभयं वृष्णिधूर्य ते
चरणमीयुषां संसृतेर्भयात्।
करसरोरुहं कान्त कामदं
शिरसि धेहि नः श्रीकरग्रहम्॥
व्रजजनार्तिहन्वीर योषितां
निजजनस्मयध्वंसनस्मित।
भज सखे भवत्किंकरीः स्म नो
जलरुहाननं चारु दर्शय॥

प्रणतदेहिना पापकर्षण
तृणचरानुग श्रीनिकेतनम् ।
फणिफणार्पित ते पदाम्बुज
कृणु कुचेषु न कृन्धि हृच्छयम् ।।
मधुरया गिरा वल्गुवाक्यया
बुधमनोज्ञया पुष्करेक्षण ।
विधिकरीरिमा वीर मुह्यती-
रधरसीधुनाप्याययस्व न ।।
तव कथामृत तप्तजीवन
कविभिरीडित कल्मषापहम् ।
श्रवणमङ्गल श्रीमदातत
भुवि गृणन्ति ते भूरिदा जना ।।
प्रहसित प्रिय प्रेमवीक्षित
विहरण च ते ध्यानमङ्गलम् ।
रहसि सविदो या हृदिस्पृश
कुहक नो मन क्षोभयन्ति हि ।।
चलसि यद्व्रजाच्चारयन्पशू-
न्नलिनसुन्दर नाथ ते पदम् ।
शिलतृणाङ्कुरै सीदतीति न.
कलिलता मन कान्त गच्छति ।।
दिनपरिक्षये नीलकुन्तलै-
र्वनरुहानन बिभ्रदावृतम् ।
घनरजस्वल दर्शयन्मुहु-
र्मनसि न स्मर वीर यच्छसि ।।
प्रणतकामद पद्मजार्चित
धरणिमण्डन ध्येयमापदि ।
चरणपङ्कज शतम च ते
रमण न स्तनेष्वर्पयाधिहन् ।।
सुरतवर्धन शोकनाशन
स्वरितवेणुना सुष्ठु चुम्बितम् ।

इतररागविस्मारणं नृणां
वितर वीर नस्तेऽधरामृतम् ।।
अटति यद्भवानह्नि काननं
त्रुटिर्युगायते त्वामपश्यताम् ।
कुटिलकुन्तलं श्रीमुखं च ते
जड उदीक्षतां पक्ष्मकृद्दृशाम् ।।
पतिसुतान्वयभ्रातृबान्धवा-
नतिविलङ्घ्य तेऽन्त्यच्युतागताः ।
गतिविदस्तवोद्गीतमोहिताः
कितव योषितः कस्त्यजेन्निशि ।।
रहसि संविदं हृच्छयोदयं
प्रहसिताननं प्रेमवीक्षणम् ।
बृहदुरः श्रियो वीक्ष्य धाम ते
मुहुरतिस्पृहा मुह्यते मनः ।।
व्रजवनौकसां व्यक्तिरङ्ग ते
वृजिनहन्त्र्यलं विश्वमङ्गलम् ।
त्यज मनाक् च नस्त्वत्स्पृहात्मनां
स्वजनहृद्रुजां यन्निसूदनम् ।।
यत्ते सुजातचरणाम्बुरुहं स्तनेषु
भीताः शनैः प्रिय दधीमहि कर्कशेषु ।
तेनाटवीमटसि तद्व्यथते न किंस्वि-
त्कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः ।।

# कुन्तीकृतः कृष्णस्तवः

(भागवतपु० १।७-८)

सूत उवाच।

पुत्रशोकातुरा सर्वे पाण्डवा सह कृष्णया।
स्वाना मृताना यत्कृत्य चक्रुर्निर्हरणादिकम्॥
अथ ते सपरेताना स्वानामुदकमिच्छताम्।
दातु सकृष्णा गङ्गाया पुरस्कृत्य ययु स्त्रिय ॥
ते निनीयोदक सर्वे विलप्य च भृश पुन ।
आप्लुता हरिपादाब्जरज पूतसरिज्जले॥
तत्रासीन कुरुपति धृतराष्ट्र सहानुजम्।
गान्धारी पुत्रशोकार्ता पृथा कृष्णा च माधव ॥
सान्त्वयामास मुनिभिर्हतबन्धून्शुचार्पितान्।
भूतेपु कालस्य गति दर्शयन्नप्रतिक्रियाम्॥
साधयित्वाजातशत्रो स्वराज्य कितवैर्हृतम्।
घातयित्वासतो राज्ञ कचस्पर्शक्षतायुप ॥
याजयित्वाश्वमेधैस्त त्रिभिरुत्तमकल्पकै.।
तद्यश पावन दिक्षु शतमन्योरिवातनोत्॥
आमन्त्र्य पाण्डुपुत्राश्च शैनेयोद्धवसयुत ।
द्वैपायनादिभिर्विप्रै पूजितै प्रतिपूजित ॥
गन्तु कृतमतिर्ब्रह्मन्द्वारका रथमास्थित.।
उपलेभेऽभिधावन्तीमुत्तरा भयविह्वलाम्॥
पाहि पाहि महायोगिन्देवदेव जगत्पते।
नान्य त्वदभय पश्ये यत्र मृत्यु परस्परम्॥
अभिद्रवति मामीश शरस्तप्तायसो विभो।
काम दहतु मा नाथ मा मे गर्भो निपात्यताम्॥
उपधार्य वचस्तस्या भगवान्भक्तवत्सल ।
अपाण्डवमिद कर्तुं द्रौणेरस्त्रमबुध्यत॥

तर्ह्येवाथ मुनिश्रेष्ठ पाण्डवाः पञ्च सायकान् ।
आत्मनोऽभिमुखान्दीप्तानालक्ष्यास्त्राण्युपाददुः ।।
व्यसन वीक्ष्य तत्तेषामनन्यविपयात्मनाम् ।
सुदर्शनेन स्वास्त्रेण स्वाना रक्षा व्यधाद्विभु. ।।
अन्त स्थ· सर्वभूतानामात्मा योगेश्वरो हरिः ।
स्वमाययावृणोद्गर्भं वैराटचा कुरुतन्तवे ।।
यद्यप्यस्त्र ब्रह्मशिरस्त्वमोघ चाप्रतिक्रियम् ।
वैष्णव तेज आसाद्य समशाम्यद्भृगूद्वह ।।
मा मस्था ह्येतदाश्चर्यं सर्वाश्चर्यमयेऽच्युते ।
य इद मायया देव्या सृजत्यवति हन्त्यज· ।।
ब्रह्मतेजोविनिर्मुक्तैरात्मजै सह कृष्णया ।
प्रयाणाभिमुखं कृष्णमिदमाह पृथा सती ।।

कुन्त्युवाच ।

नमस्ये पुरुष त्वाद्यमीश्वर प्रकृतेः परम् ।
अलक्ष्यं सर्वभूतानामन्तर्बहिरवस्थितम् ।।
मायाजवनिकाच्छन्नमज्ञाधोक्षजमव्ययम् ।
न लक्ष्यसे मूढदृशा नटो नाटचधरो यथा ।।
तथा परमहसाना मुनीनाममलात्मनाम् ।
भक्तियोगविधानार्थ कथ पश्येम हि स्त्रियः ।।
कृष्णाय वासुदेवाय देवकीनन्दनाय च ।
नन्दगोपकुमाराय गोविन्दाय नमो नम. ।।
नम. पङ्कजनाभाय नम पङ्कजमालिने ।
नम पङ्कजनेत्राय नमस्ते पङ्कजाङ्घ्रये ।।

यथा हृषीकेश खलेन देवकी
कसेन रुद्धातिचिर शुचार्पिता ।
विमोचिताह च सहात्मजा विभो
त्वयैव नाथेन मुहुर्विपद्गणात् ।।
विषान्महाग्ने· पुरुषाददर्शना-
दसत्सभाया वनवासकृच्छ्रत ।

मृधे मृधेऽनेकमहारथास्त्रतो
द्रौण्यस्त्रतश्चास्म हरेऽभिरक्षिता ॥
विपद. सन्तु ता शश्वत्तत्र तत्र जगद्गुरो ।
भवतो दर्शन यत्स्यादपुनर्भवदर्शनम् ॥
जन्मैश्वर्यश्रुतश्रीभिरेधमानमद पुमान् ।
नैवार्हत्यभिधातु वै त्वामकिचनगोचरम् ॥
नमोऽकिचनवित्ताय निवृत्तगुणवृत्तये ।
आत्मारामाय शान्ताय कैवल्यपतये नम ॥
मन्ये त्वा कालमीशानमनादिनिधन विभुम् ।
सम चरन्त सर्वत्र भूताना यन्मिथ कलि ॥
न वेद कश्चिद्भगवश्चिकीर्षित
तवेहमानस्य नृणा विडम्बनम् ।
न यस्य कश्चिद्दयितोऽस्ति कर्हिचिद्
द्वेष्यश्च यस्मिन्विषमा मतिर्नृणाम् ॥
जन्म कर्म च विश्वात्मन्नजस्याकर्तुरात्मन ।
तिर्यङ्नृषिषु याद.सु तदत्यन्तविडम्बनम् ॥
गोप्याददे त्वयि कृतागसि दाम तावद्
या ते दशाश्रुकलिलाञ्जनसभ्रमाक्षम् ।
वक्त्र निनीय भयभावनया स्थितस्य
सा मा विमोहयति भीरपि यद्बिभेति ॥
केचिदाहुरज जात पुण्यश्लोकस्य कीर्त्तये ।
यदोः प्रियस्यान्ववाये मलयस्येव चन्दनम् ॥
अपरे वसुदेवस्य देवक्या याचितोऽभ्यगात् ।
अजस्त्वमस्य क्षेमाय वधाय च सुरद्विपाम् ॥
भारावतरणायान्ये भुवो नाव इवोदधौ ।
सीदन्त्या भूरिभारेण जातो ह्यात्मभुवार्थित ॥
भवेऽस्मिन्क्लिश्यमानानामविद्याकामकर्मभि. ।
श्रवणस्मरणार्हाणि करिष्यन्निति केचन ॥
शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णश
स्मरन्ति नन्दन्ति तवेहित जना ।

त एव पश्यन्त्यचिरेण तावक
भवप्रवाहोपरम पदाम्वुजम् ।।
अप्यद्य नस्त्व स्वकृतेहित प्रभो
जिहाससि स्वित्सुहृदोऽनुजीविनः ।
येषा न चान्यद्भवत पदाम्वुजा-
त्परायण राजसु योजिताहसाम् ।।
के वयं नामरूपाभ्या यदुभि. सह पाण्डवा ।
भवतो दर्शन यर्हि हृषीकाणामिवेशितु. ।।
नेय शोभिष्यते तत्र यथेदानी गदाधर ।
त्वत्पदैरङ्किता भाति स्वलक्षणविलक्षितैः ।।
इमे जनपदा स्वृद्धा. सुपक्वौपधिवीरुध. ।
वनाद्रिनद्युदन्वन्तो ह्येधन्ते तव वीक्षिताः ।।
अथ विश्वेश विश्वात्मन्विश्वमूर्ते स्वकेपु मे ।
स्नेहपाशमिम छिन्धि दृढ पाण्डुपु वृष्णिष् ।।
त्वयि मेऽनन्यविषया मतिर्मधुपतेऽसकृत् ।
रतिमुद्वहतादद्धा गङ्गेवौघमुदन्वति ।।
श्रीकृष्ण कृष्णसख वृष्ण्यृपभावनीध्रु-
ग्राजन्यवशदहनानपवर्गवीर्य ।
गोविन्द गोद्विजसुरार्तिहरावतार
योगेश्वराखिलगुरो भगवन्नमस्ते ।।
पृथयेत्थ कलपदै. परिणूताखिलोदय. ।
मन्द जहास वैकुण्ठो मोहयन्निव मायया ।।

# ब्रह्ममहेश्वरप्रादुर्भावः

(कूर्मपु० १।९)

कूर्म उवाच ।

शृणुध्वमृषय सर्वे शकरस्यामितौजस ।
पुत्रत्व ब्रह्मणस्तस्य पद्मयोनित्वमेव च ।।
अतीतकल्पावसाने तमोभूत जगत्त्रयम् ।
आसीदेकार्णव घोर न देवाद्या न चर्षय ।।
तत्र नारायणो देवो निर्जने निरुपप्लवे ।
आश्रित्य शेषशयन सुष्वाप पुरुषोत्तम ।।
सहस्रशीर्षा भूत्वा स सहस्राक्ष सहस्रपात् ।
सहस्रबाहु सर्वज्ञश्चिन्त्यमानो मनीषिभि ।।
पीतवासा विशालाक्षो नीलजीमूतसनिभ ।
महाविभूतिर्योगात्मा योगिना तु दयापर ।।
कदाचित्तस्य सुप्तस्य लीलार्थ दिव्यमद्भुतम् ।
त्रैलोक्यसार विमल नाभ्या पङ्कजमुद्बभौ ।।
शतयोजनविस्तीर्णं तरुणादित्यसनिभम् ।
दिव्यगन्धमय पुण्य कर्णिकाकेसरान्वितम् ।।
तस्यैव सुचिर काल वर्तमानस्य शार्ङ्गिण ।
हिरण्यगर्भो भगवास्त देशमुपचक्रमे ।।
स त करेण विश्वात्मा समुत्थाप्य सनातनम् ।
प्रोवाच मधुर वाक्य मायया तस्य मोहित ।।
अस्मिन्नेकार्णवे घोरे निर्जने तमसावृते ।
एकाकी को भवाञ्छेते ब्रूहि मे पुरुषर्षभ ।।
तस्य तद्वचन श्रुत्वा विहस्य गरुडध्वज ।
उवाच देव ब्रह्माण मेघगम्भीरनिस्वन ।।
भो भो नारायण देव लोकाना प्रभवाव्य(प्य? )यम् ।
महायोगीश्वर मा वै जानीहि पुरुषोत्तमम् ।।

मयि पश्य जगत्कृत्स्न त्वा च लोकपितामहम् ।
सपर्वतमहाद्वीप समुद्रैः सप्तभिर्वृतम् ।।
एवमाभाष्य विश्वात्मा प्रोवाच पुरुष हरि ।
जानन्नपि महायोगी को भवानिति वेधसम् ।।
तत प्रहस्य भगवान्ब्रह्मा वेदनिधिः प्रभु ।
प्रत्युवाचाम्बुजाभाक्ष सस्मित श्लक्ष्णया गिरा ।।
अह धाता विधाता च स्वयभू प्रपितामह ।
मय्येव सस्थितं विश्वं ब्रह्माह विश्वतोमुख ।।
श्रुत्वा वाचं स भगवान्विष्णु सत्यपराक्रम ।
अनुज्ञाप्याथ योगेन प्रविष्टो ब्रह्मणस्तनुम् ।।
त्रैलोक्यमेतत्सकल सदेवासुरमानुपम् ।
उदरे तस्य देवस्य दृष्ट्वा विस्मयमागत ।।
तदास्य वक्त्रान्निष्क्रम्य पन्नगेन्द्रारिकेतन ।
अथापि भगवान्विष्णु. पितामहमथाब्रवीत् ।।
भवानप्येवमेवाद्य शाश्वत हि ममोदरम् ।
प्रविश्य लोकान्पश्यैतान्विचित्रान्पुरुपर्पभ ।।
तत प्रह्लादिनी वाणी श्रुत्वा तस्याभिनन्द्य च ।
श्रीपतेरुदर भूयः प्रविवेश कुशध्वजः ।।
तानेव लोकान्गर्भस्थानपश्यत्सत्यविक्रम. ।
पर्यटित्वाथ देवस्य ददृशेऽन्तं न वै हरे ।।
ततो द्वाराणि सर्वाणि पिहितानि महात्मना ।
जनार्दनेन ब्रह्मासौ नाभ्यां द्वारमविन्दत ।।
तत्र योगबलेनासौ प्रविश्य कनकाण्डजः ।
उज्जहारात्मनो रूप पुष्कराच्चतुरानन ।।
विरराजारविन्दस्थः पद्मगर्भसमद्युति ।
ब्रह्मा स्वयंभूर्भगवाञ्जगद्योनिः पितामह. ।।
स मन्यमानो विश्वेशमात्मानं परम पदम् ।
प्रोवाच विष्णु पुरुष मेघगम्भीरया गिरा ।।
कृत कि भवतेदानीमात्मनो जयकाङ्क्षया ।
एकोऽहं प्रबलो नान्यो मा वै कोऽभिभविष्यति ।।

श्रुत्वा नारायणो वाक्य ब्रह्मणोक्तमतन्द्रित. ।
सान्त्वपूर्वमिद वाक्य बभाषे मधुर हरिः ।।
भवान्धाता विधाता च स्वयंभू. प्रपितामह ।
न मात्सर्याभियोगेन द्वाराणि पिहितानि मे ।।
कि तु लीलार्थमेवैतन्न त्वा बाधितुमिच्छया ।
को हि बाधितुमन्विच्छेद्देवदेव पितामहम् ।।
न तेऽन्यथावगन्तव्य मान्यो मे सर्वथा भवान् ।
सर्वं क्षमस्व कल्याण यन्मयापकृत तव ।।
अस्माच्च कारणाद्ब्रह्मन्पुत्रो भवतु मे भवान् ।
पद्मयोनिरिति ख्यातो मत्प्रियार्थं जगन्मय ।।
तत स भगवान्देवो वर दत्त्वा किरीटिने ।
प्रहर्षमतुल गत्वा पुनर्विष्णुमभाषत ।।
भवान्सर्वात्मकोऽनन्त सर्वेषा परमेश्वर ।
सर्वभूतान्तरात्मा वै पर ब्रह्म सनातनम् ।।
अह वै सर्वलोकानामात्मा देवो महेश्वर ।
मन्मय सर्वमेवेद ब्रह्माह पुरुष पर ।।
नावाभ्या विद्यते ह्यन्यो लोकाना परमेश्वर ।
एका मूर्तिर्द्विधा भिन्ना नारायणपितामहौ ।।
तेनैवमुक्तो ब्रह्माण वासुदेवोऽब्रवीदिदम् ।
इय प्रतिज्ञा भवतो विनाशाय भविष्यति ।।
कि न पश्यसि योगेन ब्रह्माधिपतिमव्ययम् ।
प्रधानपुरुषेशान वेदाह परमेश्वरम् ।।
य न पश्यन्ति योगीन्द्रा. सांख्या अपि महेश्वरम् ।
अनादिनिधन ब्रह्म तमेव शरण व्रज ।।
तत. क्रुद्धोऽम्बुजाभाक्ष ब्रह्मा प्रोवाच केशवम् ।
भगवन्नूनमात्मान वेद्मि तत्परमाक्षरम् ।।
ब्रह्माण जगतामेकमात्मान परम पदम् ।
नावाभ्या विद्यते त्वन्यो लोकाना परमेश्वर ।।
सत्यज्य निद्रा विपुला स्वमात्मान विलोकय ।
तस्य तत्क्रोधज वाक्य श्रुत्वा विष्णुरभाषत ।।

मा मैव वद कल्याण परीवाद महात्मन. ।
न मेऽस्त्यविदित ब्रह्मन्नान्यथाह वदामि ते ।।
किंतु मोहयते ब्रह्मन्भवन्त पारमेश्वरी ।
मायाशेषविशेषाणा हेतुरात्मसमुद्भवा ।।
एतावदुक्त्वा भगवान्विष्णुस्तूष्णी बभूव ह ।
ज्ञात्वा तत्परम तत्त्व स्वमात्मान सुरेश्वर. ।।
ततो ह्यपरिमेयात्मा भूताना परमेश्वर. ।
प्रसाद ब्रह्मणे कर्तु प्रादुरासीत्ततो हर. ।।
ललाटनयनो देवो जटामण्डलमण्डित ।
त्रिशूलपाणिर्भगवांस्तेजसा परमो निधि. ।।
विद्याविलासग्रथिता ग्रहै. सार्केन्दुतारकैः ।
मालामत्यद्भुताकारा धारयन्पादलम्बिनीम् ।।
त दृष्ट्वा देवमीशान ब्रह्मा लोकपितामहः ।
मोहितो माययात्यर्थं पीतवाससमब्रवीत् ।।
क एष पुरुषो नील शूलपाणिस्त्रिलोचन. ।
तेजोराशिरमेयात्मा समायाति जनार्दन ।।
तस्य तद्वचन श्रुत्वा विष्णुर्दानवमर्दन ।
अपश्यदीश्वर देव ज्वलन्त विमलेऽम्भसि ।।
ज्ञात्वा त परम भावमैश्वर ब्रह्मभावन. ।
प्रोवाचोत्थाय भगवान्देवदेव पितामहम् ।।
अय देवो महादेव स्वयज्योतिः सनातन· ।
अनादिनिधनोऽचिन्त्यो लोकानामीश्वरो महान् ।।
शंकरः शभुरीशान. सर्वात्मा परमेश्वर. ।
भूतानामधिपो योगी महेशो विमल शिव ।।
एष धाता विधाता च प्रधानपुरुषेश्वर ।
यं प्रपश्यन्ति यतयो ब्रह्मभावेन भाविता· ।।
सृजत्येष जगत्कृत्स्न पाति सहरते तथा ।
कालो भूत्वा महादेव. केवलो निष्कल· शिव ।।
ब्रह्माणं विदधे पूर्वं भवन्त यः सनातन ।
वेदाश्च प्रददौ तुभ्य सोऽयमायाति शकर ।।

अस्यैव चापरा मूर्ति विश्वयोनि सनातनीम् ।
वासुदेवाभिधान मामवेहि प्रपितामह ।।
कि न पश्यसि योगेश ब्रह्माधिपतिमव्ययम् ।
दिव्य भवतु ते चक्षुर्येन द्रक्ष्यसि तत्परम् ।।
लब्ध्वा चैव तदा चक्षुर्विष्णोर्लोकपितामह ।
बुबुधे परमेशान पुरत· समवस्थितम् ।।
स लब्ध्वा परम ज्ञानमैश्वर प्रपितामह ।
प्रपेदे शरण देव तमेव पितर शिवम् ।।
ओकार समनुस्मृत्य सस्तभ्यात्मानमात्मना ।
अथर्वशिरसा देव तुष्टाव च कृताञ्जलि ।।
सस्तुतस्तेन भगवान्ब्रह्मणा परमेश्वर. ।
अवाप परमा प्रीति व्याजहार स्मयन्निव ।।
मत्समस्त्व न सदेहो वत्स भक्तश्च मे भवान् ।
मयैवोत्पादित. पूर्वं लोकसृष्टयर्थमव्यय ।।
त्वमात्मा ह्यादिपुरुषो मम देहसमुद्भव ।
वर वरय विश्वात्मन्वरदोऽह तवानघ ।।
स देवदेववचन निशम्य कमलोद्भव ।
निरीक्ष्य विष्णु पुरुप प्रणम्योवाच शकरम् ।।
भगवन्भूतभव्येश महादेवाम्बिकापते ।
त्वामेव पुत्रमिच्छामि त्वया वा सदृश सुतम् ।।
मोहितोऽस्मि महादेव मायया सूक्ष्मया त्वया ।
न जाने परम भाव याथातथ्येन ते शिव ।।
त्वमेव देव भक्ताना माता भ्राता पिता सुहृत् ।
प्रसीद तव पादाब्ज नमामि शरणागत ।।
स तस्य वचन श्रुत्वा जगन्नाथो वृषध्वज. ।
व्याजहार तदा पुत्र समालोक्य जनार्दनम् ।।
यदर्थित भगवता तत्करिष्यामि पुत्रक ।
विज्ञानमैश्वर दिव्यमुत्पत्स्यति तवानघ ।।
त्वमेव सर्वभूतानामादिकर्ता नियोजित ।
कुरुष्व तेपु देवेश माया लोकपितामह ।।

एष नारायणोऽनन्तो ममैव परमा तनु ।
भविष्यति तवेशान योगक्षेमवहो हरि. ।।
एव व्याहृत्य हस्ताभ्या प्रीत· स परमेश्वर. ।
सस्पृश्य देव ब्रह्माण हरि वचनमब्रवीत् ।।
तुष्टोऽस्मि सर्वथाह ते भक्तस्त्व च जगन्मय ।
वर वृणीष्व न ह्यावा विभिन्नौ परमार्थत ।।
श्रुत्वाथ देववचन विष्णुर्विश्वजगन्मय ।
प्राह प्रसन्नया वाचा समालोक्य च तन्मुखम् ।।
एष एव वर श्लाघ्यो यदह परमेश्वरम् ।
पश्यामि परमात्मान भक्तिर्भवतु मे त्वयि ।।
तथेत्युक्त्वा महादेव. पुनर्विष्णुमभापत ।
भवान्सर्वस्य कार्यस्य कर्ताहमधिदैवतम् ।।
त्वन्मय मन्मय चैव सर्वमेतन्न सशय ।
भवान्सोमस्त्वह सूर्यो भवान्रात्रिरह दिनम् ।।
भवान्प्रकृतिरव्यक्तमह पुरुष एव च ।
भवान्ज्ञानमह ज्ञाता भवान्मायाहमीश्वर ।
भवान्विद्यात्मिका शक्ति. शक्तिमानहमीश्वर. ।।
योऽह स निष्कलो देव सोऽसि नारायण· प्रभु ।
एकीभावेन पश्यन्ति योगिनो ब्रह्मवादिन ।।
त्वामनाश्रित्य विश्वात्मन्न योगी मामुपैष्यति ।
पालयैतज्जगत्कृत्स्न सदेवासुरमानुषम् ।।
इतीदमुक्त्वा भगवाननादि
स्वमायया मोहितभूतभेद ।
जगाम जन्मर्द्धिविनाशहीन
धामैकमव्यक्तमनन्तशक्ति ।।

# प्रलयवर्णनम्

(कूर्मपु० २।४३)

कूर्म उवाच ।

नित्यो नैमित्तिकश्चैव प्राकृतात्यन्तिकौ तथा ।
चतुर्धायं पुराणेऽस्मिन्प्रोच्यते प्रतिसंचरः ।।
योऽयं संदृश्यते नित्यं लोके भूतक्षयस्त्विह ।
नित्यः संकीर्त्यते नाम्ना मुनिभिः प्रतिसंचरः ।।
ब्राह्मो नैमित्तिको नाम कल्पान्ते यो भविष्यति ।
त्रैलोक्यस्यास्य कथितः प्रतिसर्गो मनीषिभिः ।।
महदाद्यं विशेषान्तं यदा संयाति संक्षयम् ।
प्राकृतः प्रतिसर्गोऽयं प्रोच्यते कालचिन्तकैः ।।
ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि ।
प्रलयः प्रतिसर्गोऽयं कालचिन्तापरैर्द्विजैः ।।
आत्यन्तिकस्तु कथितः प्रलयो ज्ञानसाधनः ।
नैमित्तिकमिदानीं वः कथयिष्ये समासतः ।।
चतुर्युगसहस्रान्ते संप्राप्ते प्रतिसंचरे ।
स्वात्मसंस्थाः प्रजाः कर्तुं प्रतिपेदे प्रजापतिः ।।
ततो भवत्यनावृष्टिस्तीव्रा सा शतवार्षिकी ।
भूतक्षयकरी घोरा सर्वभूतक्षयकरी ।।
ततो यान्यल्पसाराणि सत्त्वानि पृथिवीतले ।
तानि चाग्रे प्रलीयन्ते भूमित्वमुपयान्ति च ।।
सप्तरश्मिरथो भूत्वा समुत्तिष्ठन्दिवाकरः ।
असह्यरश्मिर्भवति पिबन्नम्भो गभस्तिभिः ।।
तस्य ते रश्मयः सप्त पिबन्त्यम्बु महार्णवे ।
तेनाहारेण ते दीप्ताः सूर्याः सप्त भवन्ति हि ।।
ततस्ते रश्मयः सप्त शोषयित्वा चतुर्दिशम् ।
चतुर्लोकमिदं सर्वं दहन्ति शिखिनो यथा ।।

व्याप्नुवन्तश्च ते दीप्ता ऊर्ध्वं चाध. स्वरश्मिभि ।
दीप्यन्ते भास्करा· सप्त युगान्ताग्निप्रदीपिता ॥
ते सूर्या वारिणा दीप्ता बहुसाहस्ररश्मय. ।
ख समावृत्य तिष्ठन्ति प्रदहन्तो वसुधराम् ॥
ततस्तेषां प्रतापेन दह्यमाना वसुधरा ।
साद्रिनद्यर्णवद्वीपा नि स्नेहा सप्रपद्यते ॥
मरीचिभि· प्रदीप्ताभि संतताभि. समन्तत ।
अधश्चोर्ध्वं च लग्नाभिस्तिर्यक्चैव समावृतम् ॥
सूर्याग्निना प्रमृष्टाना ससृष्टाना परस्परम् ।
एकत्वमुपयातानामेकज्वालं भवत्युत ॥
सर्वलोकप्रणाशश्च सोऽग्निर्भूत्वा तु मण्डली ।
चतुर्लोकमिद सर्वं निर्दहत्याशु तेजसा ॥
तत. प्रलीने सर्वस्मिन्जङ्गमे स्थावरे तथा ।
निर्वृक्षा निस्तृणा भूमि. कूर्मपृष्ठा प्रकाशते ॥
अम्बरीषमिवाभाति सर्वमापूरित जगत् ।
सर्वमेतत्तदर्चिर्भिः पूर्णं जाज्वल्यते पुन· ॥
पाताले यानि सत्त्वानि महोदधिगतानि च ।
तत्र तानि प्रलीयन्ते भूमित्वमुपयान्ति च ॥
द्वीपाश्च पर्वताश्चैव वर्षाण्यथ महोदधीन् ।
तान्सर्वान्भस्मसाच्चक्रे सप्तात्मा पावक प्रभु. ॥
समुद्रेभ्यो नदीभ्यश्च पातालेभ्यश्च सर्वशः ।
पिबन्नप. समिद्धोऽग्नि· पृथिवीमाश्रितो ज्वलेत् ॥
तत सवर्तक शैलानतिक्रम्य महास्तथा ।
लोकान्दहति दीप्तात्मा रुद्रतेजोविजृम्भितः ॥
स दग्ध्वा पृथिवी देवो रसातलमशोभयत् ।
अधस्तात्पृथिवी दग्ध्वा दिवमूर्ध्वं दहिष्यति ॥
योजनाना शतानीह सहस्राण्ययुतानि च ।
उत्तिष्ठन्ति शिखास्तस्य वह्ने सवर्तकस्य तु ॥
गन्धर्वांश्च पिशाचाश्च सयक्षोरगराक्षसान् ।
तदा दहत्यसौ दीप्त कालरुद्रप्रणोदित ॥

भूर्लोकं च भुवर्लोकं स्वर्लोकं च तथा महः ।
दहेदशेषं कालाग्निः कालाविष्टतनुः स्वयम् ।।
व्याप्तेष्वेतेषु लोकेषु तिर्यगूर्ध्वमथाग्निना ।
तत्तेजः समनुप्राप्य कृत्स्नं जगदिदं शनैः ।
अयोगुडनिभं सर्वं तदा चैकं प्रकाशते ।।
ततो गजकुलोन्नादास्तडिद्भिः समलङ्कृताः ।
उत्तिष्ठन्ति तदा व्योम्नि घोराः संवर्तका घनाः ।।
केचिन्नीलोत्पलश्यामाः केचित्कुमुदसंनिभाः ।
धूम्रवर्णास्तथा केचित्केचित्पीताः पयोधराः ।।
केचिद्रासभवर्णास्तु लाक्षारसनिभाः परे ।
शङ्खकुन्दनिभाश्चान्ये जात्यञ्जननिभास्तथा ।।
मनःशिलाभास्त्वन्ये च कपोतसदृशाः परे ।
केचिद्द्राक्षवर्णाभास्तथान्ये क्षीरसंनिभाः ।।
तथा कर्बूरवर्णाश्च भिन्नाञ्जननिभास्तथा ।
इन्द्रगोपनिभाः केचिद्धरितालनिभास्तथा ।
इन्द्रचापनिभाः केचिदुत्तिष्ठन्ति घना दिवि ।।
केचित्पर्वतसंकाशाः केचिद्गजकुलोपमाः ।
कूटागारनिभाश्चान्ये केचिन्मीनकुलोद्वहाः ।।
बहुरूपा घोररूपा घोरस्वरनिनादिनः ।
तदा जलधराः सर्वे पूरयन्ति नभस्तलम् ।।
ततस्ते जलदा घोरा राविणो भास्करात्मजाः ।
सप्तधासंभृतात्मानः तमग्निं शमयन्त्युत ।।
ततस्ते जलदा वर्षं मुञ्चन्तीह महारवम् ।
सुघोरमशिवं सर्वं नाशयन्ति च पावकम् ।।
प्रवृद्धैस्तैस्तदात्यर्थमम्भसा पूर्यते जगत् ।
अद्भिस्तेजोऽभिभूतात्मा तदाग्निः प्रविशत्यपः ।।
नष्टे चाग्नौ वर्षशतैः पयोदाः क्षयसंभवाः ।
प्लावयन्तो जगत्सर्वं महाजलपरिस्रवैः ।।
धाराभिः पूरयन्तीदं नोद्यमानाः स्वयंभुवा ।
अत्यन्तसलिलौघास्तु वेला इव महोदधेः ।

साद्रिद्वीपा तत· पृथ्वी जलैः सछाद्यते घनैः ।।
आदित्यरश्मिभि पीत जलमभ्रेपु तिष्ठति ।
पुनः पतति तद्भूमौ पूर्यन्ते तेन चार्णवा· ।।
तत. समुद्रा स्वा वेलामतिक्रान्तास्तु कृत्स्नश. ।
पर्वताश्च विलीयन्ते मही चाप्सु निमज्जति ।।
तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे ।
योगनिद्रा समास्थाय शेते देवो जगत्पति· ।।
चतुर्युगसहस्रान्त कल्पमाहुर्मनीपिणः ।
वाराहो वर्तते कल्पो यस्य विस्तर ईरित ।।
असख्यातास्तथा कल्पा ब्रह्मविष्णुशिवात्मका. ।
कथिता हि पुराणेषु मुनिभिः कालचिन्तकै. ।।
सात्त्विकेष्वथ कल्पेपु माहात्म्यमधिक हरेः ।
तामसेपु हरस्योक्त राजसेषु प्रजापते· ।।
योऽय प्रवर्तते कल्पो वाराह. सात्त्विको मत ।
अन्ये च सात्त्विका. कल्पा मम तेपु परिग्रह. ।।
ध्यान तपस्तथा ज्ञान लब्ध्वा तेष्वेव योगिन ।
आराध्य गिरिश मा च यान्ति तत्परम पदम् ।।
सोऽह तत्त्व समास्थाय मायी मायामय स्वयम् ।
एकार्णवे जगत्यस्मिन्योगनिद्रा व्रजामि तु ।।
मा पश्यन्ति महात्मान सप्तकाले महर्षय. ।
जनलोके वर्तमानास्तापसा योगचक्षुषा ।।
अह पुराण पुरुषो भूर्भुव.प्रभवो विभुः ।
सहस्रचरण श्रीमान्सहस्राक्षः सहस्रपात् ।।
मन्त्रोऽग्निर्दक्षिणा गाव कुशाश्च समिधो ह्यहम् ।
प्रोक्षणी च स्रुवश्चैव सोमो घृतमथास्म्यहम् ।।
सवर्तको महानात्मा पवित्र परम यश ।
वेदो वेद्य प्रभुर्गोप्ता गोपतिर्ब्राह्मणो मुखम् ।।
अनन्तस्तारको योगी गतिर्गतिमता वरः ।
हस· प्राणोऽथ कपिलो विश्वमूर्तिं. सनातन ।।
क्षेत्रज्ञ प्रकृति· कालो जगद्बीजमथामृतम् ।

माता पिता महादेवो मत्तो ह्यन्यन्न विद्यते ।।
आदित्यवर्णो भुवनस्य गोप्ता
नारायण पुरुषो योगमूर्ति ।
मा पश्यन्ते यतयो योगनिष्ठा
ज्ञात्वात्मान मम तत्त्व व्रजन्ति ।।

# हरललिते प्रावृट्शरत्कालयोर्वर्णनम्

(वामनपु० १-२)

पुलस्त्य उवाच ।

पुरा हैमवती देवी मन्दरस्थं महेश्वरम् ।
उवाच वचनं दृष्ट्वा ग्रीष्मकालमुपस्थितम् ।।
ग्रीष्मः प्रवृत्तो देवेश न च मे विद्यते गृहम् ।
यत्र वातातपौ भीष्मौ स्थितयोर्नौ गमिष्यतः ।।
एवमुक्तो भवान्यैतच्छंकरो वाक्यमब्रवीत् ।
निराश्रयोऽहं सुदति सदारण्यचरः शुभे ।।
इत्युक्ता शंकरेणाथ वृक्षच्छायासु नारद ।
निदाघकालमनयत्सम शर्वेण सा सती ।।
निदाघान्ते समुद्भूतो निर्जनाचरितोऽद्भुतः ।
घनान्धकारिताशो वै प्रावृट्कालोऽतिरावववान् ।।
त दृष्ट्वा दक्षतनुजा प्रावृट्कालमुपस्थितम् ।
प्रोवाच वाक्यं देवेश सती सप्रणयं तदा ।।

सत्युवाच ।

निवान्ति वाता हृदयावदारणा
गर्जन्त्यमी तोयधरा महेश ।
स्फुरन्ति नीलाभ्रगणेषु विद्युतो
वाशन्ति केकारवमेव बर्हिणः ।।
पतन्ति धारा गगनात्परिच्युता
बका बलाकाश्च भजन्ति तोयदान् ।
कदम्बसर्जार्जुनकेतकीना
पुष्पाणि मुञ्चन्ति च मारुताहिना ।।
श्रुत्वैव मेघस्य दृढ तु गर्जितं
त्यजन्ति हंसाश्च सरांसि तत्क्षणात् ।

नीचोद्धतान्सत्पुरुषा यथाश्रया-
न्प्रवृद्धमूलानपि सत्यजन्ति ।।
इमानि यूथानि तथा मृगाणा
त्वरन्ति धावन्ति रमन्ति शभो ।
धावन्ति हृष्टानि वनस्थलीषु
सर्वा भुवस्तोयदसप्रवृद्धया ।।
राजन्ति शष्पावृतसस्ययुक्ता-
स्तथाचिराभा. सुतरा स्फुरन्ति ।
रम्येषु नीलेषु घनेषु देव
नूनं समृद्धि मलिनस्य दृष्ट्वा ।।
चरन्ति शूरास्तरणोद्गमेषु
उद्वृत्तवेगाः सहसैव निम्नगा ।
जाता· शशाङ्काङ्कितचारुमौले
किमत्र चित्र यदनुज्ज्वल जनम् ।।
श्रयन्ति नीचानुगता हि योषितो
नीलेषु मेघेषु समाश्रित नभ ।
पुष्पेषु सर्जा मुकुलेषु नीपा·
फलेषु च श्रीश्च पय.स्वथापगा. ।।
पत्रेषु पद्मेषु महासरासि
सुदुस्तर. सप्रति वर्षकाल ।
इतीदृशे शकर दु सहेऽद्भुते
काले सुरौद्रे ननु ते ब्रवीमि ।।
गृहं कुरुष्वात्र महाचलोत्तमे
सुनिर्वृता येन भवामि शभो ।
इत्थ त्रिनेत्रः श्रुतिरामणीयक
श्रुत्वा वचो वाक्यमिद वभाषे ।।
न मेऽस्ति वित्त गृहसचयार्थे
मृगारिचर्मावृतदेहिन प्रिये ।
ममोपवीत भुजगेश्वर फणी
कर्णेऽपि पद्मश्च तथैव पिङ्गल ।।

केयूरमेकं मम कम्बलस्त्वहि-
र्द्वितीयमन्यो भुजगो धनंजय ।
नागस्तथैवाश्वतरो हि कङ्कणं
सव्येतरे तक्षक उत्तरं तथा ।
नीलोऽपि नीलाञ्जनतुल्यवर्णः
श्रोणीतटे राजति सुप्रतिष्ठः ।।

पुलस्त्य उवाच ।

इति वचनमथोग्रं शंकरात्सा मृडानी
श्रुतमपि तदसत्यं श्रीमदाकर्ण्य भीता ।
अवनितलमवेक्ष्य स्वामिनो वासकृच्छ्रा-
त्परिवदति सरोषं लज्जयोच्छ्वस्य चोष्णम् ।।

देव्युवाच ।

किमेवं सश्रितायास्तु प्रावृट्कालो गमिष्यति ।
वृक्षमूले स्थितायास्तु सुनयेन वदाव्यय ।।

शंकर उवाच ।

घनावस्थितदेहाया प्रावृट्कालः प्रयास्यति ।
यथाम्बुधारा न तव निपतिष्यन्ति विग्रहे ।।

पुलस्त्य उवाच ।

ततो हरस्तद्घनखण्डमुन्नत-
मारुह्य तस्थौ सह दक्षकन्यया ।
ततोऽभवन्नाम महेश्वरस्य
जीमूतकेतुस्त्विति विश्रुतं दिवि ।।
ततस्त्रिनेत्रस्य गतः प्रावृट्कालो घनोपरि ।
लोकानन्दकरी रम्या शरत्समभवन्मुने ।।
त्यजन्ति नीलाम्बुधरा नभस्तलं
वृक्षाश्च कङ्काः सरितस्तटानि ।

पद्मानि गन्धं निलयानि वायसा
रुरुर्विषाण कलुष जलाशया. ।।
विकासमायान्ति च पङ्कजानि
चन्द्रांशवो भान्ति लता सुपुष्पाः ।
नन्दन्ति कृष्टान्यपि गोकुलानि
सन्तश्च संतोषमनुव्रजन्ति ।।
सर.सु पद्म गगने च तारका
जलाशयेष्वेव तथा पयासि ।
सता च चित्त हि दिशा मुखै सम
वैमल्यमायान्ति शशाङ्ककान्तय ।।
एतादृशे हर काले मेघपृष्ठाधिवासिनीम् ।
सतीमादाय शैलेन्द्र मन्दर समुपाययौ ।।
ततो मन्दरपृष्ठेऽसौ स्थित समशिलातले ।
रेमे स शभुर्भगवान्सत्या सह महाद्युति. ।।

# नरनारायणचरिते उर्वशीसृष्टिः

(वामनपु० ६–७)

पुलस्त्य उवाच ।

बह्वृचो ब्राह्मणो योऽसौ धर्मो दिव्यवपुः सदा ।
तस्य भार्या त्वहिंसा च तस्यामजनयत्सुतान् ॥
हरिं कृष्णं च देवर्षे नरनारायणौ तथा ।
योगाभ्यासरतौ नित्यं हरिकृष्णौ बभूवतुः ॥
नरनारायणौ चैव जगतो हितकाम्यया ।
तप्येतां च तपः सौम्यौ पुराणऋषिसत्तमौ ॥
प्रालेयाद्रिं समागम्य तीर्थे बदरिकाश्रमे ।
गृणन्तौ तत्परं ब्रह्म गङ्गाया विपुले तटे ॥
नरनारायणाभ्यां च जगदेतच्चराचरम् ।
तापितं तपसा ब्रह्मन्संक्षोभं परमं ययौ ॥
संक्षुब्धस्तपसा ताभ्यां क्षोभणाय शतक्रतुः ।
रम्भामप्सरसां श्रेष्ठां प्रैषयत्स महाश्रमम् ॥
कन्दर्पश्च सुदुर्धर्षश्चूताङ्कुरमहायुधः ।
समं सहचरेणैव वसन्तेनाशु संगतः ॥
ततो माधवकन्दर्पौ सा चैवाप्सरसां वरा ।
बदर्याश्रममागम्य विचिक्रीडुर्यथेच्छया ॥
ततो वसन्ते संप्राप्ते किंशुका ज्वलनप्रभाः ।
निष्पत्राः सततं रेजुः शोभयन्तो धरातलम् ॥
शिशिरं नाम मातङ्गं विदार्य नखरैरिव ।
वसन्तः केसरी प्राप्तः पलाशकुसुमैर्मुने ॥
मया तुषारश्च करी निर्जितः स्वेन तेजसा ।
तमेवमहसल्लोध्रैर्वसन्तः कुन्दकुड्मलैः ॥
वनानि कर्णिकाराणां पुष्पितानि विरेजिरे ।
यथा नरेन्द्रपत्राणि कनकाभरणानि वै ॥
तेषामनु तथा नीपाः किंकरा इव रेजिरे ।
स्वामिसंलब्धसंमाना भृत्या राजसुता इव ॥

रक्ताशोकवना भान्ति पुष्पिता. सहसोज्ज्वला:।
भृत्या वसन्तनृपते संग्रामासृक्क्षता इव ।।
भृङ्गवृन्दा: पिञ्जरिता राजन्ते गहने वने ।
पुलकाभिवृता यद्वत्सज्जना सुहृदागमे ।।
मञ्जरीभिर्विराजन्ते नदीकूलेषु वेतसा ।
वक्तुकामा इवाङ्गुल्या कोऽस्माक सदृशो नग. ।।
रक्ताशोककरा तन्वी देवर्षे किशुकाङ्घ्रिका ।
नीलाशोककरा श्यामा विकासिकमलानना ।।
नीलेन्दीवरनेत्रा च ब्रह्मन्विल्वफलस्तनी ।
प्रोत्फुल्लकुन्ददशना मञ्जरीकरशोभिता ।।
बन्धुजीवाधरा शुभ्रसिन्दुवारनवाङ्कुरा ।
पुस्कोकिलस्वना दिव्या कङ्कोलवसना शुभा ।।
बर्हिवृन्दकलापा च सारसस्वननूपुरा ।
प्राग्वंशरसना ब्रह्मन्मत्तहसगतिस्तथा ।।
पुत्रजीवाशुकासङ्गरोमराजिविराजिता ।
वसन्तलक्ष्मी: सप्राप्ता तस्मिन्बदरिकाश्रमे ।।
ततो नारायणो दृष्ट्वा आश्रमस्यानवद्यताम् ।
समीक्ष्य स दिश. सर्वास्ततोऽनङ्गमपश्यत ।।
ततोऽनङ्ग विभुर्दृष्ट्वा ब्रह्मन्नारायणो मुनि· ।
विहस्यैव वच. प्राह कन्दर्प इह आस्यताम् ।।
तदक्षुब्धत्वमीक्ष्यास्य कामो विस्मयमागत. ।
वसन्तोऽपि महाचिन्ता जगामाशु महामुने ।।
ततश्चाप्सरसो दृष्ट्वा स्वागतेनाभिपूज्य च ।
वसन्तमाह भगवानेह्येहि स्थीयतामित. ।।
ततो विहस्य भगवान्मञ्जरी कुसुमावृताम् ।
आदाय प्राक्सुवर्णाङ्गीमूर्वोर्बाला विनिर्ममे ।।
ऊरूद्भवा स कन्दर्पो दृष्ट्वा सर्वाङ्गसुन्दरीम् ।
अमन्यत तदानङ्ग. किमिय सा प्रिया रति. ।।
तदेव वचन चारु स्वक्षि भ्रूकुटिलालकम् ।
सुनासावशाधरोष्ठमालोकनपरायणम् ।।

तावेवाहार्यविरलौ पीवरौ मग्नचूचुकौ ।
राजेतेऽस्या कुचौ पीनौ सज्जनाविव संहतौ ।।
तदेव तनुचार्वङ्ग्या वलित्रयविभूपितम् ।
उदर राजते श्लक्ष्ण रोमावलिविभूपितम् ।।
रोमावली च जघनाद्याति स्तनतटद्वयम् ।
राजते भृङ्गमालेव पुलिनात्कमलाकरम् ।।
जघन त्वतिविस्तीर्णं भात्यस्या रसनावृतम् ।
क्षीरोदमथने नद्ध भुजङ्गेनेव मन्दरम् ।।
कदलीस्तम्भसदृशैरूर्ध्वमूलेरथोरुभि· ।
विभाति सा सुचार्वङ्गी पद्मकिञ्जल्कसंनिभा ।।
जानुनी गूढगुल्फे च शुभे जङ्घे त्वरोमशे ।
विभात्यस्यास्तथा पादावलक्तकसमत्विपौ ।।
इति सचिन्तयन्कामस्तामनिन्दितलोचनाम् ।
कामातुरोऽसौ सजात किमुतान्यो जनो मुने ।।
माधवोऽप्युर्वशी दृष्ट्वा सचिन्तयति नारद ।
किंस्वित्कामनरेन्द्रस्य राजधानी स्वय स्थिता ।।
अज्ञाता शशिनो नूनमियं कान्तिर्निशाक्षये ।
रविरश्मिप्रतापार्तिभीता शरणमागता ।।
इत्थ सचिन्तयन्नेव अवष्टभ्याप्सरोगणम् ।
तस्थौ मुनिरिव ध्यानमास्थित स तु माधव. ।।
तत स विस्मितान्सर्वान्कन्दर्पादीन्महामुने ।
दृष्ट्वा प्रोवाच वचन स्मित कृत्वा शुभव्रत ।।
इय ममोरुसभूता कामाप्सरसमाधवी ।
नीयता सुरलोकाय दीयता वासवाय च ।।
इत्युक्ता कम्पमानास्ते जग्मुर्गृह्योर्वशी दिवम् ।
सहस्राक्षाय ते प्रोचु रूपयौवनशालिनीम् ।।
आचख्युश्चरित ताभ्यां धर्मज्ञाभ्या महामुने ।
देवराजाय कामाद्यास्ततोऽभूद्विस्मय. परम् ।।
एतादृशं हि चरित ख्यातिमग्र्या जगाम ह ।
पातालेषु तथा मर्त्ये दिक्ष्वष्टासु जगाम च ।।

# पराशरजन्मकथा

(लिङ्गपु० १।६४)

ऋषय ऊचुः।

कथं हि रक्षसा शक्तिर्भक्षितः सोऽनुजैः सह।
वासिष्ठो वदतां श्रेष्ठ सूत वक्तुमिहार्हसि॥

सूत उवाच।

राक्षसो रुधिरो नाम वसिष्ठस्य सुतं पुरा।
शक्तिं स भक्षयामास शक्तेः शापात्सहानुजैः॥
वसिष्ठयाज्यं विप्रेन्द्रास्तदाविश्यैव भूपतिम्।
कल्माषपादं रुधिरो विश्वामित्रेण चोदितः॥
भक्षितः स इति श्रुत्वा वसिष्ठस्तेन रक्षसा।
शक्तिः शक्तिमतां श्रेष्ठो भ्रातृभिः सह धर्मवित्॥
हा पुत्र पुत्र पुत्रेति क्रन्दमानो मुहुर्मुहुः।
अरुन्धत्या सह मुनिः पपात भुवि दुःखितः॥
नष्टं कुलमिति श्रुत्वा मर्तुं चक्रे मतिं तदा।
स्मरन्पुत्रशतं चैव शक्तिज्येष्ठं च शक्तिमान्॥
न तं विनाहं जीविष्ये इति निश्चित्य दुःखितः॥
आरुह्य मूर्धानमजात्मजोऽसौ
तयात्मवान्सर्वविदात्मविच्च।
धराधरस्यैव तदा धरायां
पपात पत्न्या सह साश्रुदृष्टिः॥
धराधरात्तं पतितं धरा तदा
दधार तत्रापि विचित्रकण्ठी।
कराम्बुजाभ्यां करिखेलगामिनी
रुदन्तमादाय रुरोद सा च॥
तदा तस्य स्नुषा प्राह पत्नी शक्तेर्महामुनिम्।
वसिष्ठं वदतां श्रेष्ठं रुदन्ती भयविह्वला॥

भगवन्ब्राह्मणश्रेष्ठ तव देहमिदं शुभम् ।
पालयस्व विभो द्रष्टुं तव पौत्र ममात्मजम् ।।
न त्याज्य तव विप्रेन्द्र देहमेतत्सुशोभनम् ।
गर्भस्थो मम सर्वार्थसाधकः शक्तिजो यत ।।
एवमुक्त्वाथ धर्मज्ञा कराभ्या कमलेक्षणा ।
उत्थाप्य श्वशुरं नत्वा नेत्रे संमृज्य वारिणा ।।
दुःखितापि परित्रातु श्वशुरं दुःखित तदा ।
अरुन्धती च कल्याणी प्रार्थयामास दु.खिताम् ।।
स्नुषावाक्य ततः श्रुत्वा वसिष्ठोत्थाय भूतलात् ।
सज्ञामवाप्य चालिङ्ग्य सा पपात सुदु खिता ।।
अरुन्धती कराभ्या ता संस्पृश्यास्राकुलेक्षणाम् ।
रुरोद मुनिशार्दूलो भार्यया सुतवत्सलः ।।
अथ नाभ्यम्बुजे विष्णोर्यथा तस्याश्चतुर्मुखः ।
आसीनो गर्भशय्यायां कुमार ऋचमाह सः ।।
ततो निशम्य भगवान्वसिष्ठ ऋचमादरात् ।
केनोक्तामिति सचिन्त्य तदातिष्ठत्समाहितः ।।
व्योमाङ्गणस्थोऽथ हरिः पुण्डरीकनिभेक्षणः ।
वसिष्ठमाह विश्वात्मा घृणया स घृणानिधिः ।।
भो वत्स वत्स विप्रेन्द्र वसिष्ठ सुतवत्सल ।
तव पौत्रमुखाम्भोजादृगेषाद्य विनि.सृता ।।
मत्समस्तव पौत्रोऽसौ शक्तिज शक्तिमान्मुने ।
तस्मादुत्तिष्ठ संत्यज्य शोकं ब्रह्मसुतोत्तम ।।
रुद्रभक्तश्च गर्भस्थो रुद्रपूजापरायणः ।
रुद्रदेवप्रभावेन कुलं ते सतरिष्यति ।।
एवमुक्त्वा घृणी विप्रं भगवान्पुरुषोत्तमः ।
वसिष्ठ मुनिशार्दूल तत्रैवान्तरधीयत ।।
तत. प्रणम्य शिरसा वसिष्ठो वारिजेक्षणम् ।
अदृश्यन्त्या महातेजा पस्पर्शोदरमादरात् ।।
हा पुत्र पुत्र पुत्रेति पपात च सुदु.खितः ।
ललापारुन्धती प्रेक्ष्य तदासौ रुदती द्विजा. ।।

स्वपुत्रं च स्मरन्दु खात्पुनरेह्येहि पुत्रक ।
तव पुत्रमिम दृष्ट्वा भो शक्ते कुलधारणम् ।
तवान्तिक गमिष्यामि तव मात्रा न सशय· ।।

सूत उवाच ।

एवमुक्त्वा रुदन्विप्र आलिङ्ग्यारुन्धती तदा ।
पपात ताडयन्तीव स्वस्य कुक्षी (-क्षिं ?) करेण वै ।।
अदृश्यन्ती जघानाथ शक्तिजस्यालय शुभा ।
स्वोदर दु खिता भूमौ ललाप च पपात च ।।
अरुन्धती तदा भीता वसिष्ठश्च महामति· ।
समुत्थाप्य स्नुषां बालामूचतुर्भयविह्वलौ ।।
विचारमुग्धे तव गर्भमण्डल
कराम्बुजाभ्यां विनिहत्य दुर्लभम् ।
कुलं वसिष्ठस्य समस्तमप्यहो
निहन्तुमार्ये कथमुद्यता वद ।।
तवात्मज शक्तिसुत च दृष्ट्वा
चास्वाद्य वक्त्रामृतमार्यसूनोः ।
त्रातु यतो देहमिमं मुनीन्द्रः
सुनिश्चितः पाहि ततः शरीरम् ।।

सूत उवाच ।

एव स्नुषामुपालभ्य मुनि चारुन्धती स्थिता ।
अरुन्धती वसिष्ठस्य प्राह चार्तेति विह्वला ।।
त्वय्येव जीवित चास्य मुनेर्यत्सुव्रते मम ।
जीवितं रक्ष देहस्य धात्री च कुरु यद्धितम् ।।

अदृश्यन्ती उवाच ।

मया यदि मुनिश्रेष्ठो (-ष्ठ ?) त्रातुं वै निश्चितं स्वकम् ।
ममाशुभं शुभं देह कथचित्पालयाम्यहम् ।।
प्रियदु खमह प्राप्ता ह्यसती नात्र सशय. ।
मुने दु खादह दग्धा यत. पुत्री मुने तव ।।

अहोऽद्भुतं मया दृष्टं दु:खपात्री ह्यह विभो ।
दु खत्राता भव ब्रह्मन्ब्रह्मसूनो जगद्गुरो ।।
तथापि भर्तृरहिता दीना नारी भवेदिह ।
पाहि मा तत आर्येन्द्र परिभूता भविष्यति ।।
पिता माता च पुत्राश्च पौत्राः श्वशुर एव च ।
एते न बान्धवा. स्त्रीणा भर्ता बन्धुः परा गतिः ।।
आत्मनो यद्धि कथितमप्यर्धमिति पण्डितैः ।
तदप्यत्र मृषा ह्यासीद्गतः शक्तिरहं स्थिता ।।
अहो ममात्र काठिन्य मनसो मुनिपुङ्गव ।
पति प्राणसमं त्यक्त्वा स्थिता यत्र क्षण यतः ।।
वसिष्ठाश्वत्थमाश्रित्य ह्यमृता तु यथा लता ।
निर्मूलाप्यमृता भर्त्रा त्यक्ता दीना स्थिताप्यहम् ।।
स्नुषावाक्य निशम्यैवं वसिष्ठो भार्यया सह ।
तदा चक्रे मतिं धीमान्यातु स्वाश्रममाश्रमी ।।
कृच्छ्रात्सभार्यो भगवान्वसिष्ठः स्वाश्रम क्षणात् ।
अदृश्यन्त्या च पुण्यात्मा संविवेश स चिन्तयन् ।।
सा गर्भं पालयामास कथंचिन्मुनिपुङ्गवाः ।
कुलसंधारणार्थाय शक्तिपत्नी पतिव्रता ।।
ततः सासूत तनयं दशमे मासि सुप्रभम् ।
शक्तिपत्नी यथा शक्ति शक्तिमन्तमरुन्धती ।।
असूत सा दितिर्विष्णुं यथा स्वाहा गुह सुतम् ।
अग्निं यथारणि. पत्नी शक्ते. साक्षात्पराशरम् ।।
यदा तदा शक्तिसूनुरवतीर्णो महीतले ।
शक्तिस्त्यक्त्वा तदा दुःख पितृणा समता ययौ ।।
भ्रातृभि. सह पुण्यात्मा आदित्यैरिव भास्करः ।
रराज पितृलोकस्थो वासिष्ठो मुनिपुङ्गवाः ।।
जगुस्तदा च पितरो ननृतुश्च पितामहा. ।
प्रपितामहाश्च विप्रेन्द्रा ह्यवतीर्णे पराशरे ।।
ये ब्रह्मवादिनो भूमौ ननृतुर्दिवि देवता· ।
पुष्कराद्याश्च ससृजुः पुष्पवर्षं च खेचराः ।।

पुरेषु राक्षसाना च प्रणाद विषम द्विजा. ।
आश्रमस्थाश्च मुनय. समूहुर्हर्षसततिम् ।।
अवतीर्णो यथा ह्यण्डाद्भानु· सोऽपि पराशर ।
अदृश्यन्त्याश्चतुर्वक्त्रो मेघजालाद्दिवाकर ।।
सुख च दु खमभवददृश्यन्त्यास्तथा द्विजा ।
दृष्ट्वा पुत्र पति स्मृत्वा अरुन्धत्या मुनेस्तथा ।।
दृष्ट्वा च तनय बाला पराशरमतिद्युतिम् ।
ललाप विह्वला बाला सन्नकण्ठी पपात च ।।
सा पराशरमहो महामति
देवदानवगणैश्च पूजितम् ।
जातमात्रमनघ शुचिस्मिता
बुध्य साश्रुनयना ललाप च ।।
हा वसिष्ठसुत कुत्रचिद्गत
पश्य पुत्रमनघ तवात्मजम् ।
त्यज्य दीनवदना वनान्तरे
पुत्रदर्शनपरामिमा प्रभो ।।
शक्ते स्व च सुत पश्य भ्रातृभि. सह षण्मुखम् ।
यथा महेश्वरोऽपश्यत्सगणो हृषितानन ।।
अथ तस्यास्तदालाप वसिष्ठो मुनिसत्तम ।
श्रुत्वा स्नुषामुवाचेद मा रोदीरिति दु खित. ।।
आज्ञया तस्य सा शोक वसिष्ठस्य कुलाङ्गना ।
त्यक्त्वा ह्यपालयद्बाल बाला बालमृगेक्षणा ।।

# संयमननिष्ठुरकसंवादः

(वराहपु० ५)

रैभ्य उवाच।

बृहस्पते कर्मिणा किं प्राप्यते ज्ञानिनाथवा।
मोक्ष एतन्ममाचक्ष्व पृच्छत. संशय प्रभो ॥

बृहस्पतिरुवाच।

यत्किंचित्कुरुते कर्म पुरुप: साध्वसाधु वा।
सर्वं नारायणे न्यस्य कुर्वन्नपि न लिप्यते ॥
श्रूयते च द्विजश्रेष्ठ सवादो विप्रलुब्धयो:।
आत्रेयो ब्राह्मण: कश्चिद्वेदाभ्यासरतो मुनि: ॥
तपस्यभिरत: प्रात.स्नायी त्रिषवणे रत:।
नाम्ना सयमन: पूर्वमेकस्मिन्दिवसे नदीम्।
धर्मारण्ये गत. स्नातु धन्या भागीरथी शुभाम् ॥
तत्रासीनं महायूथं हरिणाना विचक्षण:।
लुब्धो निष्ठुरको नाम धनुष्पाणि: कृतान्तवत्।
आययौ तं जिघासु: सन्सज्यं संयुज्य सायकम् ॥
तत: संयमनो विप्रो दृष्ट्वा त मृगयारतम्।
वारयामास मा भद्र जीवघातमिम कुरु ॥
एतच्छ्रुत्वा वचो व्याध· स्मितपूर्वमिद वच:।
उवाच नाह हिसामि पृथग्जीवान्द्विजोत्तम ॥
परमात्मा त्वय भूतै. क्रीडते भगवान्स्वयम्।
कृता मायावली मन्त्रैस्तद्वदेतन्न संशय. ॥
अहभाव· सदा ब्रह्मन्न विधेयो मुमुक्षुभि:।
प्राणयात्रारतं सर्वं जगदेतद्विचेष्टितम् ॥
तत्राहमिति य: शब्द. स साधुत्वं न गच्छति।
इत्याकर्ण्य स विप्रेन्द्रो द्विज· सयमनस्तदा।

विस्मयेनाब्रवीद्वाक्य लुब्धं निष्ठुरकं द्विजः ।।
किमेतदुच्यते भद्र प्रत्यक्ष हेतुमद्वच. ।
तत· श्रुत्वा पुनर्विप्र लुब्धक. प्राह धर्मवित् ।
कृत्वा लोहमय जाल तस्याधो ज्वलनं ददौ ।।
दत्तवह्नि द्विज प्राह ज्वाल्यता काष्ठसचय ।
ततो विप्रो मुखेनाग्नि प्रज्वाल्य विरराम ह ।।
ज्वलिते तु पुनर्वह्नौ तं जाल लोहसभवम् ।
गवाक्षैर्निर्गतज्वाल बभौ कादम्बिगोलवत् ।।
पृथक्पृथक्सहस्राणि निश्चेलुर्ज्वलनार्चिष ।
एकस्थानगतस्यापि वह्नेरायसजालकै· ।।
ततो लुब्धोऽब्रवीद्विप्रमेका ज्वाला महामुने ।
गृहाण येन शेषाणा करिष्यामीह नाशनम् ।।
एवमुक्त्वा हुताशे तु तोयपूर्णघट द्रुतम् ।
चिक्षेप सहसा वह्नि प्रशशामाथ पूर्ववत् ।।
ततोऽब्रवील्लुब्धकस्तु ब्राह्मण त तपोधनम् ।
भगवन्या त्वया ज्वाला गृहीतासीद्धुताशनात् ।
प्रयच्छ येन मार्गेण मासान्यानाय्य भक्षये ।।
एवमुक्तस्तदा विप्रो यावदायसजालकम् ।
पश्यत्येव न तत्राग्निर्मूलनाशे गत क्षयम् ।।
ततो विलक्षभावेन ब्राह्मण शसितव्रत· ।
तूष्णीभूतः स्थितस्तावल्लुब्धको वाक्यमब्रवीत् ।।
एतस्मिञ्ज्वलितो वह्निर्बहुशाखश्च सत्तम ।
मूलनाशे भवेन्नाशस्तद्वदेतदपि द्विज ।।
आत्मा स प्रकृतिस्थश्च भूताना सश्रयो भवेत् ।
विकृतादुद्भवस्तस्य एपा वै जगत स्थिति· ।।
पिण्डग्रहणधर्मेण यदस्य विहित व्रतम् ।
तत्तदात्मनि सयोज्य कुर्वाणो नावसीदति ।।
एवमुक्ते तु व्याधेन ब्राह्मणो राजसत्तम ।
पुष्पवृष्टिरथाकाशात्तस्योपरि पपात ह ।।
विमानानि च दिव्यानि कामगानि महान्ति च ।

बहुरत्नानि मुख्यानि ददृशे ब्राह्मणोत्तम ।।
तेषु निष्ठुरक लुब्ध सर्वेषु समवस्थितम् ।
ददृशे ब्राह्मणस्तत्र कामरूपिणमुत्तमम् ।।
अद्वैतवासनासिद्ध योगाद्बहुशरीरकम् ।
दृष्ट्वा विप्रो मुदा युक्त. प्रययौ निजमाश्रमम् ।।
एव ज्ञान भवेत्कर्म कुर्वतोऽपि स्वजातिकम् ।।

# धर्मव्याधकथा

(वराहपु० ८)

वराह उवाच।

योऽसौ वसो शरीरे तु व्याधो भूत्वा नृपस्य ह।
स स्ववृत्त्या स्थित: काल चतुर्वर्षसहस्रकम्॥
एकैक स्वकुटुम्बार्थे हत्वा वनचर मृगम्।
भृत्यातिथिहुताशाना प्रीणन कुरुते सदा॥
मिथिलाया वरारोहे सदा पर्वणि पर्वणि।
पितॄणा कुरुते श्राद्ध स्वाचारेण विचक्षण॥
अग्नि परिचरन्नित्य वदन्सत्य सुभाषितम्।
प्राणयात्रानुषक्तस्तु योऽसौ जीव न पातयेत्॥
एव तु वसतस्तस्य धर्मबुद्धिर्महातपा।
पुत्रस्त्वर्जुनको नाम बभूव मुनिवद्वशी॥
तस्य कालेन महता चारित्रेण च धीमत।
बभूवार्जुनका नाम कन्या च वरवर्णिनी॥
तस्या यौवनकाले तु चिन्तयामास धर्मवित्।
कस्येय दीयते कन्या को वा योग्यश्च वै पुमान्॥
इति चिन्तयतस्तस्य मतङ्गस्य सुत प्रति।
धर्मव्याधस्य सुव्यक्त प्रसन्नाख्य प्रतिब्रुवन्॥
एव सचिन्त्य मातङ्ग प्रसन्न प्रति सोद्यत:।
उवाच तस्य पितर प्रसन्नायार्जुनी भवान्।
गृहाण तपता श्रेष्ठ स्वय दत्ता महात्मने॥

मतङ्ग उवाच।

प्रसन्नोऽय मम सुत सर्वशास्त्रविशारद।
गृह्णाम्यर्जुनका कन्या त्वत्सुता व्याधसत्तम॥
एवमुक्ते तदा कन्या धर्मव्याधो महातपा।
मतङ्गपुत्राय ददौ प्रसन्नाय च धीमते॥

धर्मव्याधस्तदा कन्या दत्त्वा स्वगृहमीयिवान् ।
सापि श्वशुरयोर्भर्तुः शुश्रूषणपराभवत् ।।
अथ कालेन महता सा कन्यार्जुनका शुभा ।
उक्ता श्वश्र्वा सुता पुत्री जीवहन्तुस्त्वमीदृशी ।
न जानासि तप. कर्तुं भर्तुराराधन तथा ।।
सापि स्वल्पापराधेन भर्त्सिता तनुमध्यमा ।
पितुर्वेश्मागता बाला रोदमाना मुहुर्मुहु ।।
पित्रा पृष्टा किमेतत्ते पुत्रि रोदनकारणम् ।
एवमुक्ता तदा सा तु कथयामास भामिनी ।।
श्वश्र्वाहमुक्ता तीव्रेण कोपेन महता पित ।
जीवहन्तु. सुतेत्युच्चैरसकृद्व्याधजेति च ।।
एतच्छ्रुत्वा स धर्मात्मा धर्मव्याधो रुषान्वितः ।
मतङ्गस्य गृह सोऽथ गत्वा जनपदैर्वृतम् ।।
तस्यागतस्य सबन्धी मतङ्गो जयता वर. ।
आसनाद्यर्घ्यपाद्येन पूजयित्वेदमब्रवीत् ।।
किमागमनकृत्यं ते कि करोम्यागतक्रियाम् ।।

व्याध उवाच ।

भोजन किंचिदिच्छामि भोक्तु चैतन्यवर्जितम् ।
कौतूहलेन येनाहमागतो भवतो गृहे ।।

मतङ्ग उवाच ।

गोधूमा व्रीहयश्चैव संस्कृता मम वेश्मनि ।
भुज्यतां धर्मविच्छ्रेष्ठ यथाकाम तपोधन ।।

व्याध उवाच ।

पश्यामि कीदृशास्ते हि गोधूमा व्रीहयो यवा ।
स्वरूपेण च सन्त्येते येन वो वेद्मि सत्तम ।।

वराह उवाच ।

एवमुक्ते मतङ्गेन शूर्पं गोधूमपूरितम् ।
अपर तत्र व्रीहीणा धर्मव्याधाय दर्शितम् ।।

दृष्ट्वा व्रीहीन्स गोधूमान्धर्मव्याधो वरासनात् ।
उत्थाय गन्तुमारेभे मतङ्गेन निवारितः ॥

मतङ्ग उवाच ।

किमर्थं गन्तुमारब्धं त्वया वद महामते ।
अभुक्तेनैव ससिद्धं मद्गृहे चान्नमुत्तमम् ।
पाचयित्वा स्वय चैव कस्मात्त्व नाद्य भुञ्जसे ॥

व्याध उवाच ।

सहस्रश. कोटिशश्च जीवान्हसि दिने दिने ।
अथेदृशस्य पापस्य कोऽन्न भुञ्जति सत्पुमान् ॥
अचैतन्यं यदि गृहे विद्यतेऽन्न सुसस्कृतम् ।
तदानीमस्मि सभोक्ता मत्वा तु स्वजन तव ॥
अहमेक कुटुम्बार्थे हन्म्यरण्ये पशु दिने ।
त चेत्पितृभ्य सत्कृत्य दत्त्वा भुञ्जामि सानुग ॥
त्व तु जीवान्बहून्हत्वा स्वकुटुम्बेन सानुग॰ ।
भुञ्जसे तेन सततमभोज्य तन्मत मम ॥
ब्रह्मणा तु पुरा सृष्टा ओपध्य सर्ववीरुध. ।
यज्ञार्थं तत्तु भूताना भक्ष्यमित्येव वै श्रुति ॥
दिव्यो भौमस्तथा पैत्रो मानुषो ब्राह्म एव च ।
एते पञ्च महायज्ञा ब्रह्मणा निर्मिता पुरा ॥
ब्राह्मणाना हितार्थाय इतरेषा च तन्मखा ।
इतरेषा तु वर्णाना ब्राह्मणै. कारिता शुभा ॥
एव कृत्वा नरो भुक्त्वा तस्माद्धान्न विशुध्यति ।
अन्यथा व्रीहयोऽप्येते एकैके मृगपक्षिण ।
मन्तव्या दातृभोक्तृणा महामास तु तत्स्मृतम् ॥
मया ते दुहिता दत्ता पुत्रार्थे वरवर्णिनी ।
सा च त्वद्भार्यया प्रोक्ता दुहिता जन्तुघातिन ।
अतोऽर्थमागतोऽह ते गृह प्रतिसमीक्षितुम् ॥
आचार देवपूजा च अतिथीना च तर्पणम् ।

एतेषामेकमप्यत्र कुर्वन्नपि न दृश्यसे ।।
तदहं गन्तुमिच्छामि पितॄणां श्राद्धकाम्यया ।
स्वगृहे नैव भुञ्जामि पितॄणां कार्यमित्युत ।
अहं व्याधो जीवघाती न तु त्वं लोकहिंसकः ।।
मत्सुता जीवघातस्य यदोढा त्वत्सुतेन च ।
तन्महत्त्व(-त्त्वा?) च सम्प्राप्तं प्रायश्चित्तं तपोधन ।।
एवमुक्त्वा स चोत्थाय शप्त्वा नारीं तदाम्बरे ।
मा स्नुषाभिः समं श्वश्र्वा विश्वासो भवतु क्वचित् ।।
मा च स्नुषा कदाचित्स्याद्या श्वश्रूं जीवतीमिपेत् ।
एवमुक्त्वा गतो व्याधः स्वगृहं प्रति भामिनि ।।
ततो देवान्पितॄन्भक्त्या पूजयित्वा विचक्षणः ।
पुत्रं चार्जुनकं स्थाप्य स्वसतानं महातपाः ।
धर्मव्याधो जगामाशु तीर्थं त्रैलोक्यविश्रुतम् ।।

# पुष्करतीर्थवर्णनम्

(पद्मपु०, सृष्टिखण्ड १५)

पुलस्त्य उवाच ।

यथाह सर्वदेवेषु आदिदेवो व्यवस्थितः ।
तथेद परम तीर्थमादिभूत करोमि वै ।।
अह पद्मे समुत्पन्न· पद्म तद्विष्णुनाभिजम् ।
पुष्कर प्रोच्यते तीर्थमृषिभिर्वेदपाठकै ।।
तस्यैव चिन्तयानस्य ब्रह्मणो वै प्रजापते ।
मतिरेषा समुत्पन्ना व्रजाम्येष धरातले ।।
प्राक्स्थल तु समासाद्य प्रविष्टस्तद्वनोत्तमम् ।
नानाद्रुमलताकीर्णं नानापुष्पोपशोभितम् ।।
नानापक्षिरवाकीर्णं नानामृगगणाकुलम् ।
द्रुमपुष्परसामोदैर्वासित यत्समन्तत ।
बुद्धिपूर्वमिव न्यस्तै पुष्पैर्भूषितभूतलम् ।।
नानागन्धरसैरन्यै पक्वापक्वै षडर्तुकै ।
फलै सुवर्णरूपाढ्यैर्घ्राणदृष्टिमनोहरै ।।
जीर्णपत्र तृण यत्र शुष्ककाष्ठफलानि च ।
बहि क्षिपति जातानि मारुतोऽनुग्रहादिव ।।
नानापुष्पसमूहाना गन्धमादाय मारुत. ।
शीतलो वाति ख भूमि दिशो यत्राभिवासयन् ।।
हरितस्निग्धनिश्छिद्रैरकीटवनकोटरैः ।
वृक्षैरनेकसज्ञैर्यद्भूषित शिखरान्वितै. ।।
अरोगैर्दर्शनीयैश्च सुवृत्तै कैश्चिदुज्ज्वलै ।
कुटुम्बमिव विप्राणामृत्विजैर्भाति सर्वश ।।
शोभन्ते धातुसकाशैरङ्कुरै प्रसृता द्रुमा ।
कुलीनैरिव निश्छिद्रै स्वगुणै प्रसृता नरा ।।
पवनाविद्धशिखरै· स्पृशन्तीव परस्परम् ।

आजिघ्रन्तीव चान्योन्यं पुष्पशाखावतंसकाः ।।
नागवृक्षाः क्वचित्पुष्पैर्द्रुमवानीरकेशरैः ।
नयनैरिव शोभन्ते धवलैः कृष्णतारकैः ।।
पुष्पसंपन्नशिखराः कर्णिकारद्रुमाः क्वचित् ।
युग्मैर्युग्मैर्द्विधा चेह शोभन्ते साधुदंपती ।।
सुपुष्पप्रभवाटोपैः सिन्धुवारद्रुपङ्क्तयः ।
मूर्तिमत्य इवाभान्ति पूजिता वनदेवताः ।।
क्वचित्क्वचित्कुन्दलताः स्वपुष्पाभरणोज्ज्वलाः ।
दिक्षु वृक्षेषु शोभन्ते बालचन्द्रा इवोदिताः ।।
अतिक्रम्य द्रुमाग्राणि भासन्ते यूथिकालताः ।
पुष्पिताः पुष्पनिकरैर्वीजयन्त्य इवोत्थिताः ।।
सर्जार्जुनाः क्वचिद्भान्ति वनोद्देशेषु पुष्पिताः ।
धौतकौशेयवासोभिः प्रावृताः पुरुषा इव ।।
अतिमुक्तकवल्लीभिः पुष्पिताभिस्तथा द्रुमाः ।
उपगूढा विराजन्ते नारीभिरिव सुप्रियाः ।।
अपरस्परसंसक्तैः शालाशोकाश्च पल्लवैः ।
हस्तैर्हस्तान्स्पृशन्तीव सुहृदश्चिरसंगताः ।।
फलपुष्पभरानम्राः पनसाः सरलार्जुनाः ।
अन्योन्यमर्चयन्तीव पुष्पैश्चैव फलैस्तथा ।।
वायुना वेगसंश्लिष्टैः पादपाः शालबाहुभिः ।
अभ्याशमागते लोके प्रीतिभावैरिवोत्थिताः ।।
पुष्पाणामवरोधेन स्वशोभार्थं व्रजन्ति वै ।
वसन्तमहमासाद्य पुरुषाः स्पर्धयेव हि ।।
पुष्पशोभाभरनतैः शिखरैर्वायुकम्पितैः ।
नृत्यन्तीव नराः प्रीताः स्रगलंकृतशेखराः ।।
भृङ्गाः पर्यन्तविक्षिप्ताः पुष्पावलिलताधृताः ।
सवल्लीकाः प्रनृत्यन्ति मानवा इव संगताः ।।
स्वपुष्पोन्नतवल्लीभिः पादपाः क्वचिदावृताः ।
भान्ति तारागणैश्चित्रं शरदीव नभस्तलम् ।।
द्रुमाणामथवाग्रेषु पुष्पिता मालतीलताः ।

शेखरा इव शोभन्ते रचिता बुद्धिपूर्वकम् ॥
हरिता· काञ्चनच्छाया फलिता· पुष्पिता द्रुमाः ।
सौहृदं दर्शयन्तीव नरा· साधुसमागमे ॥
पुष्पकिञ्जल्ककपिला गता सर्वलतासु च ।
कदम्बपुष्पसकाशा घोषयन्तीव षट्पदा ॥
क्वचित्पुष्पासवक्षीबा सपतन्ति यतस्ततः ।
पुस्कोकिलगणा वृक्षगहनेष्विव सुप्रिया ॥
शिरीषपुष्पसकाशा· शुका मिथुनकुञ्चिता· ।
कीर्तयन्ति गिरश्चित्रा पूजिता ब्राह्मणा यथा ।
सहचारिसुसयुक्ता मयूराश्चित्रबर्हिण ।
वनान्तेष्वपि नृत्यन्ति शोभन्त इव नर्तका· ॥
कूजन्त पक्षिसघाता नानाद्रुमविचारिण ।
कुर्वन्ति रमणीय वै रमणीयतर वनम् ॥
नानामृगगणाकीर्णं नित्य प्रमुदिताण्डजम् ।
तद्वन नन्दनसम मनोदृष्टिविवर्धनम् ॥
पद्मपाणिस्तु भगवास्तथारूप वनोत्तमम् ।
ददर्शादर्शवद्दृष्ट्या सौम्यया पाययन्निव ॥
ता वृक्षपङ्क्तय सर्वा दृष्ट्वा देव तथागतम् ।
निवेद्य ब्रह्मणे भक्त्या मुमुचु· पुष्पसपद ॥

# हरिश्चन्द्रोपाख्यानम्

(ब्रह्मपु० १०४)

ब्रह्मोवाच ।

हरिश्चन्द्र इति त्वासीदिक्ष्वाकुप्रभवो नृपः ।
तस्य गृहे मुनी प्राप्तौ नारद पर्वतस्तथा ।।
कृत्वातिथ्य तयो सम्यग्घरिश्चन्द्रोऽब्रवीदृषी ।।

हरिश्चन्द्र उवाच ।

पुत्रार्थं क्लिश्यते लोक. किं पुत्रेण भविष्यति ।
ज्ञानी वाप्यथवाज्ञानी उत्तमो मध्यमोऽथवा ।।
एत मे सशय नित्य ब्रूतामृषिवरावुभौ ।

ब्रह्मोवाच ।

तावूचतुर्हरिश्चन्द्रं पर्वतो नारदस्तथा ।।

नारदपर्वतावूचतु ।

एकधा दशधा राजञ्शतधा च सहस्रधा ।
उत्तर विद्यते सम्यक्तथाप्येतदुदीर्यते ।।
नापुत्रस्य परो लोको विद्यते नृपसत्तम ।
जाते पुत्रे पिता स्नान य. करोति जनाधिप ।।
दशानामश्वमेधानामभिषेकफलं लभेत् ।
आत्मप्रतिष्ठा पुत्रात्स्याज्जायते चामरोत्तमः ।।
अमृतेनामरा देवा. पुत्रेण ब्राह्मणादयः ।
त्रिऋृणान्मोचयेत्पुत्र. पितरं च पितामहान् ।।
किं तु मूलं किमु जल किं तु श्मश्रूणि किं तपः ।
विना पुत्रेण राजेन्द्र स्वर्गो मुक्तिः सुतात्स्मृताः ।।
पुत्र एव परो लोको धर्म. कामोऽर्थ एव च ।

पुत्रो मुक्ति. पर ज्योतिस्तारक: सर्वदेहिनाम् ।।
विना पुत्रेण राजेन्द्र स्वर्गमोक्षौ सुदुर्लभौ ।
पुत्र एव परो लोके धर्मकामार्थसिद्धये ।।
विना पुत्रेण यद्दत्त विना पुत्रेण यद्धुतम् ।
विना पुत्रेण यज्जन्म व्यर्थं तदवभाति मे ।।
तस्मात्पुत्रसम किंचित्काम्य नास्ति जगत्त्रये ।
तच्छ्रुत्वा विस्मयवास्तावुवाच नृप पुन ।।

हरिश्चन्द्र उवाच ।

कथ मे स्यात्सुतो ब्रूता यत्र क्वापि यथातथम् ।
येन केनाप्युपायेन कृत्वा किंचित्तु पौरुषम् ।
मन्त्रेण यागदानाभ्यामुत्पाद्योऽसौ सुतो मया ।।

ब्रह्मोवाच ।

तावूचतुर्नृपश्रेष्ठ हरिश्चन्द्रं सुतार्थिनम् ।
ध्यात्वा क्षण तथा सम्यग्गौतमी याहि मानद ।।
तत्रापापतिरुत्कृष्ट ददाति मनसीप्सितम् ।
वरुण सर्वदाता वै मुनिभि परिकीर्तित ।।
स तु प्रीत शनै काले तव पुत्र प्रदास्यति ।
एतच्छ्रुत्वा नृपश्रेष्ठो मुनिवाक्य तथाकरोत् ।।
तोषायामास वरुण गौतमीतीरमाश्रित ।
ततश्च तुष्टो वरुणो हरिश्चन्द्रमुवाच ह ।।

वरुण उवाच ।

पुत्र दास्यामि ते राजँल्लोकत्रयविभूषणम् ।
यदि यक्ष्यसि तेनैव तव पुत्रो भवेद्ध्रुवम् ।।

ब्रह्मोवाच ।

हरिश्चन्द्रोऽपि वरुण यक्ष्ये तेनेत्यवोचत ।
ततो गत्वा हरिश्चन्द्रश्चरु कृत्वा तु वारुणम् ।।

भार्यायै नृपतिः प्रादात्ततो जातः सुतो नृपात् ।
जाते पुत्रे अपामीशः प्रोवाच वदता वरः ।।

वरुण उवाच ।

अद्यैव पुत्रो यष्टव्य स्मरसे वचनं पुरा ।

ब्रह्मोवाच ।

हरिश्चन्द्रोऽपि वरुणं प्रोवाचेदं क्रमागतम् ।।

हरिश्चन्द्र उवाच ।

निर्दशो मेध्यतां याति पशुर्यक्ष्ये ततो ह्यहम् ।।

ब्रह्मोवाच ।

तच्छ्रुत्वा वचन राज्ञो वरुणोऽगात्स्वमालयम् ।
निर्दशे पुनरभ्येत्य यजस्वेत्याह त नृपम् ।।
राजापि वरुणं प्राह निर्दन्तो निष्फल· पशु ।
पशोर्दन्तेषु जातेषु एहि गच्छाधुनाप्पते ।।
तच्छ्रुत्वा राजवचनं पुनः प्रायादपांपतिः ।
जातेषु चैव दन्तेषु सप्तवर्षेषु नारद ।।
पुनरप्याह राजान यजस्वेति ततोऽब्रवीत् ।
राजापि वरुण प्राह पत्स्यन्तीमे अपापते ।।
संपत्स्यन्ति तथा चान्ये ततो यक्ष्ये व्रजाधुना ।
पुन प्रायात्स वरुण. पुनर्दन्तेषु नारद ।।
यजस्वेति नृप प्राह राजा प्राह त्वपापतिम् ।।

राजोवाच ।

यदा तु क्षत्रियो यज्ञे पशुर्भवति वारिप ।
धनुर्वेदं यदा वेत्ति तदा स्यात्पशुरुत्तम ।।

ब्रह्मोवाच ।

तच्छ्रुत्वा राजवचन वरुणोऽगात्स्वमालयम् ।
यदास्त्रेषु च शस्त्रेषु समर्थोऽभूत्स रोहित· ।।

सर्ववेदेषु शास्त्रेषु वेत्ताभूत्स त्वरिंदम. ।
युवराज्यमनुप्राप्ते रोहिते षोडशाब्दिके ।।
प्रीतिमानगमत्तत्र यत्र राजा सरोहित· ।
आगत्य वरुण प्राह यजस्वाद्य सुत स्वकम् ।।
ओमित्युक्त्वा नृपवर ऋत्विज. प्राह भूपति. ।
रोहित च सुत ज्येष्ठ शृण्वतो वरुणस्य च ।।

हरिश्चन्द्र उवाच ।

एहि पुत्र महावीर यक्ष्ये त्वा वरुणाय हि ।।

ब्रह्मोवाच ।

किमेतदित्यथोवाच रोहित. पितर प्रति ।
पितापि तद्यथावृत्तमाचचक्षे सविस्तरम् ।।
रोहित पितर प्राह शृण्वतो वरुणस्य च ।।

रोहित उवाच ।

अह पूर्वं महाराज ऋत्विग्भि सपुरोहित ।
विष्णवे लोकनाथाय यक्ष्येऽह त्वरित शुचि ।।
पशुना वरुणेनाथ तदनुज्ञातुमर्हसि ।।

ब्रह्मोवाच ।

रोहितस्य तु तद्वाक्य श्रुत्वा वारीश्वरस्तदा ।
कोपेन महताविष्टो जलोदरमथाकरोत् ।।
हरिश्चन्द्रस्य नृपते रोहित स वन ययौ ।
गृहीत्वा स धनुर्दिव्य रथारूढो गतव्यथ ।।
यत्र चाराध्य वरुण हरिश्चन्द्रो जनेश्वर. ।
गङ्गाया प्राप्तवान्पुत्र तत्रागात्सोऽपि रोहित. ।।
व्यतीतान्यथ वर्षाणि पञ्चषष्ठे प्रवर्तति ।
तत्र स्थित्वा नृपसुत. शुश्राव नृपते रुजम् ।।
मया पुत्रेण जातेन पितुर्वै क्लेशकारिणा ।

कि फल कि नु कृत्य स्यादित्येव पर्यचिन्तयत् ।।
तस्यास्तीरे ऋषीन्पुण्यानपश्यन्नृपते· सुतः ।
गङ्गातीरे वर्तमानमपश्यदृपिसत्तमम् ।।
अजीगर्तमिति ख्यातमृषेस्तु वयसः सुतम् ।
त्रिभि. पुत्रैरनुवृत भार्यया क्षीणवृत्तिकम् ।।
त दृष्ट्वा नृपते पुत्रो नमस्येद वचोऽब्रवीत् ।

रोहित उवाच ।

क्षीणवृत्ति कृश कस्माद्दुर्मना इव लक्ष्यसे ।।

ब्रह्मोवाच ।

अजीगर्तोऽपि चोवाच रोहितं नृपतेः सुतम् ।

अजीगर्त उवाच ।

वर्तनं नास्ति देहस्य भोक्तारो बहवश्च मे ।
विनान्नेन मरिष्यामो ब्रूहि किं करवामहे ।।

ब्रह्मोवाच ।

तच्छ्रुत्वा पुनरप्याह नृपपुत्र ऋषिं तदा ।

रोहित उवाच ।

तव किं वर्तते चित्ते तद्ब्रूहि वदतां वर ।।

अजीगर्त उवाच ।

हिरण्यं रजतं गावं धान्य वस्त्रादिक न मे ।
विद्यते नृपशार्दूल वर्तन नास्ति मे ततः ।।
सुता मे सन्ति भार्या च अहं वै पञ्चमस्तथा ।
नैतेषां कतमस्यापि क्रेतान्नेन नृपोत्तम ।।

रोहित उवाच ।

किं क्रीणासि महाबुद्धेऽजीगर्त सत्यमेव मे ।
वद नान्यच्च वक्तव्य विप्रा वै सत्यवादिनः ।।

अजीगर्त उवाच ।

त्रयाणामपि पुत्राणामेकं वा मा तथैव च ।
भार्यां वापि गृहाणेमा क्रीत्वा जीवामहे वयम् ।।

रोहित उवाच ।

किं भार्यया महाबुद्धे किं त्वया वृद्धरूपिणा ।
युवानं देहि पुत्रं मे पुत्राणां यं त्वमिच्छसि ।।

अजीगर्त उवाच ।

ज्येष्ठपुत्रं शुनःपुच्छं नाहं क्रीणामि रोहित ।
माता कनीयसं चापि न क्रीणामि ततोऽनयो ।।
मध्यमं तु शुनःशेपं क्रीणामि वद तद्धनम् ।।

रोहित उवाच ।

वरुणाय पशुः कल्प्यः पुरुषो गुणवत्तरः ।
यदि क्रीणासि मूल्यं त्वं वद सत्यं महामुने ।।

ब्रह्मोवाच ।

तथेत्युक्त्वा त्वजीगर्तः पुत्रमूल्यमकल्पयत् ।
गवां सहस्रं धान्यानां निष्काणां चापि वाससाम् ।।
राजपुत्र वरं देहि दास्यामि स्वसुतं तव ।।

ब्रह्मोवाच ।

तथेत्युक्त्वा रोहितोऽपि प्रादात्सवसनं धनम् ।
दत्त्वा जगाम पितरमृषिपुत्रेण रोहितः ।।
पित्रे निवेदयामास क्रयक्रीतमृषेः सुतम् ।।

रोहित उवाच ।

वरुणाय यजस्व त्वं पशुना त्वमरुग्भव ।।

ब्रह्मोवाच ।

तथोवाच हरिश्चन्द्रः पुत्रवाक्यादनन्तरम् ।।

हरिश्चन्द्र उवाच।

ब्राह्मणा क्षत्रिया वैश्या राज्ञा पाल्या इति श्रुतिः।
विशेषतस्तु वर्णाना गुरवो हि द्विजोत्तमाः॥
विष्णोरपि हि ये पूज्या मादृशा. कुत एव हि।
अवज्ञयापि येषा स्यान्नृपाणां स्वकुलक्षयः॥
तान्पशून्कृत्वा कृपणं कथं रक्षितुमुत्सहे।
अह च ब्राह्मण कुर्यां पशु नैतद्धि युज्यते॥
वर हि जातु मरण न कथचिद्द्विज पशुम्।
करोमि तस्मात्पुत्र त्व ब्राह्मणेन सुखं व्रज॥

ब्रह्मोवाच।

एतस्मिन्नन्तरे तत्र वागुवाचाशरीरिणी।

आकाशवागुवाच।

गौतमी गच्छ राजेन्द्र ऋत्विग्भि सपुरोहित.॥
पशुना विप्रपुत्रेण रोहितेन सुतेन च।
त्वया कार्यं क्रतुश्चैव शुनःशेपवध विना।
क्रतुः पूर्णो भवेत्तत्र तस्माद्याहि महामते॥

ब्रह्मोवाच।

तच्छ्रुत्वा वचनं शीघ्र गङ्गामगान्नृपोत्तमः।
विश्वामित्रेण ऋषिणा वसिष्ठेन पुरोधसा॥
वामदेवेन ऋषिणा तथान्यैर्मुनिभि सह।
प्राप्य गङ्गा गौतमी ता नरमेधाय दीक्षित॥
वेदिमण्डपकुण्डादि यूपपश्वादि चाकरोत्।
कृत्वा सर्वं यथान्याय तस्मिन्यज्ञे प्रवर्तिते॥
शुन शेपं पशु यूपे निबध्याथ समन्त्रकम्।
वारिभि प्रोक्षित दृष्ट्वा विश्वामित्रोऽब्रवीदिदम्॥

विश्वामित्र उवाच।

देवानृषीन्हरिश्चन्द्र रोहित च विशेषत·।
अनुजानन्त्विम सर्वे शुन.शेपं द्विजोत्तमम्॥

येभ्यस्त्वयं हविर्देयो देवेभ्योऽद्य पृथक्पृथक् ।
अनुजानन्तु ते सर्वे शुन शेपं विशेषत ॥
वसाभिर्लोमभिस्त्वग्भिर्मांसै· सन्मन्त्रितैर्मखे ।
अग्नौ होष्य. पशुश्चायं शुन.शेपो द्विजोत्तम. ॥
उपासिता. स्युर्विप्रेन्द्रास्ते सर्वे त्वनुमन्य माम् ।
गौतमी यान्तु विप्रेन्द्राः स्नात्वा देवान्पृथक्पृथक् ॥
मन्त्रै स्तोत्रै. स्तुवन्तस्ते मुद यान्तु शिवे रता ।
एन रक्षन्तु मुनयो देवाश्च हविषो भुज ॥

ब्रह्मोवाच ।

तथेत्यूचुश्च मुनयो मेने च नृपसत्तम ।
ततो गत्वा शुन शेपो गङ्गा त्रैलोक्यपावनीम् ।
स्नात्वा तुष्टाव तान्देवान्ये तत्र हविषो भुज ॥
ततस्तुष्टा. सुरगणा. शुन शेप च ते मुने ।
अवदन्त सुरा· सर्वे विश्वामित्रस्य शृण्वत ।

सुरा ऊचु ।

क्रतु पूर्णो भवत्वेष शुन शेपवध विना ॥

ब्रह्मोवाच ।

विशेषेणाथ वरुणश्चावदन्नृपसत्तमम् ।
तत. पूर्णोऽभवद्राज्ञो नृमेधो लोकविश्रुत ॥
देवाना च प्रसादेन मुनीना च प्रसादत ।
तीर्थस्य तु प्रसादेन राज्ञ पूर्णोऽभवत्क्रतु ॥
विश्वामित्र. शुन शेप पूजयामास ससदि ।
अकरोदात्मन· पुत्र पूजयित्वा सुरान्तिके ॥
ज्येष्ठ चकार पुत्राणामात्मन स तु कौशिक ।
न मेनिरे ये च पुत्रा विश्वामित्रस्य धीमत ॥
शुन शेपस्य च जैष्ठ्य ताञ्शशाप स कौशिक ।
जैष्ठ्य ये मेनिरे पुत्रा. पूजयामास तान्सुतान् ॥
वरेण मुनिशार्दूलस्तदेतत्कथित मया ॥

# कण्डुचरितम्

(ब्रह्मपु० १७८)

व्यास उवाच ।

धर्मार्थकाममोक्षाणा फलदे पुरुषोत्तमे ।
कण्डुर्नाम महातेजा ऋषिः परमधार्मिक ।
सत्यवादी शुचिर्दान्त सर्वभूतहिते रत ॥
जितेन्द्रियो जितक्रोधो वेदवेदाङ्गपारग ।
अवाप परमा सिद्धिमाराध्य पुरुषोत्तमम् ॥
अन्येऽपि तत्र ससिद्धा मुनयः सशितव्रता ।
सर्वभूतहिता दान्ता जितक्रोधा विमत्सराः ॥

मुनय ऊचु ।

कोऽसौ कण्डु. कथ तत्र जगाम परमा गतिम् ।
श्रोतुमिच्छामहे तस्य चरित ब्रूहि सत्तम ॥

व्यास उवाच ।

शृणुध्वं मुनिशार्दूला. कथां तस्य मनोहराम् ।
प्रवक्ष्यामि समासेन मुनेस्तस्य विचेष्टितम् ॥
पवित्रे गोमतीतीरे विजने सुमनोहरे ।
कन्दमूलफलै पूर्णे समित्पुष्पकुशान्वितै. (-ते ?) ॥
नानाद्रुमलताकीर्णे नानापुष्पोपशोभिते ।
नानापक्षिरुते रम्ये नानामृगगणान्विते ॥
तत्राश्रमपद कण्डोर्बभूव मुनिसत्तमाः ।
सर्वर्तुफलपुष्पाढ्य कदलीखण्डमण्डितम् ॥
तपस्तेपे मुनिस्तत्र सुमहत्परमाद्भुतम् ।
व्रतोपवासैर्नियमै. स्नानमौनसुसयमै ॥
ग्रीष्मे पञ्चतपा भूत्वा वर्षासु स्थण्डिलेशय. ।

आर्द्रवासास्तु हेमन्ते स तेपे सुमहत्तपः ॥
दृष्ट्वा तु तपसो वीर्यं मुनेस्तस्य सुविस्मिताः ।
बभूवुर्देवगन्धर्वाः सिद्धविद्याधरास्तथा ॥
भूमिं तथान्तरिक्षं च दिवं च मुनिसत्तमाः ।
कण्डुः संतापयामास त्रैलोक्यं तपसो बलात् ॥
अहोऽस्य परमं धैर्यमहोऽस्य परमं तपः ।
इत्यब्रुवंस्तदा दृष्ट्वा देवास्तं तपसि स्थितम् ॥
मन्त्रयामासुरव्यग्राः शक्रेण सहितास्तदा ।
भयात्तस्य समुद्विग्नास्तपोविघ्नमभीप्सवः ॥
ज्ञात्वा तेषामभिप्रायं शक्रस्त्रिभुवनेश्वरः ।
प्रम्लोचाख्यां वरारोहां रूपयौवनगर्विताम् ॥
सुमध्यां चारुजङ्घां तां पीनश्रोणिपयोधराम् ।
सर्वलक्षणसंपन्नां प्रोवाच फलसूदनः ॥

शक्र उवाच ।

प्रम्लोचे गच्छ शीघ्रं त्वं यत्रासौ तप्यते मुनिः ।
विघ्नार्थं तस्य तपसः क्षोभयस्वाशु सुप्रभे ॥

प्रम्लोचोवाच ।

तव वाक्यं सुरश्रेष्ठ करोमि सततं प्रभो ।
किंतु शङ्का ममैवात्र जीवितस्य च संशयः ॥
बिभेमि तं मुनिवरं ब्रह्मचर्यव्रते स्थितम् ।
अत्युग्रं दीप्ततपसं ज्वलनार्कसमप्रभम् ॥
ज्ञात्वा मां स मुनिः क्रोधाद्विघ्नार्थं समुपागताम् ।
कण्डुः परमतेजस्वी शापं दास्यति दुःसहम् ॥
उर्वशी मेनका रम्भा घृताची पुञ्जिकस्थला ।
विश्वाची सहजन्या च पूर्वचित्तिस्तिलोत्तमा ॥
अलम्बुषा मिश्रकेशी शशिलेखा च वामना ।
अन्याश्चाप्सरसः सन्ति रूपयौवनगर्विताः ॥
सुमध्याश्चारुवदना पीनोन्नतपयोधराः ।
कामप्रधानकुशलास्तास्तत्र संनियोजय ॥

ब्रह्मोवाच।

तस्यास्तद्वचनं श्रुत्वा पुन. प्राह शचीपतिः।
तिष्ठन्तु नाम चान्यास्तास्त्व चात्र कुशला शुभे ।।
काम वसन्त वायु च सहायार्थे ददामि ते।
तै सार्धं गच्छ सुश्रोणि यत्रास्ते स महामुनि· ।।
शक्रस्य वचन श्रुत्वा तदा सा चारुलोचना।
जगामाकाशमार्गेण तैः सार्धं चाश्रम मुनेः ।।
गत्वा सा तत्र रुचिर ददर्श वनमुत्तमम्।
मुनिं च दीप्ततपसमाश्रमस्थमकल्मषम् ।।
अपश्यत्सा वन रम्य तैः सार्धं नन्दनोपमम्।
सर्वर्तुवरपुष्पाढ्य शाखामृगगणाकुलम् ।।
पुण्यं पद्मबलोपेत सपल्लवमहाबलम्।
श्रोत्ररम्यान्सुमधुराञ्शब्दान्खगमुखेरितान् ।।
सर्वर्तुफलभाराढ्यान्सर्वर्तुकुसुमोज्ज्वलान्।
अपश्यत्पादपांश्चैव विहंगैरनुनादितान् ।।
आम्रानाम्रातकान्भव्यान्नारिकेरान्सतिन्दुकान्।
अथ बिल्वास्तथा जीवान्दाडिमान्बीजपूरकान् ।।
पनसॉल्लकुचान्नीपाञ्शिरीषान्सुमनोहरान्।
पारावतास्तथा कोलानरिमेदाम्लवेतसान् ।।
भल्लातकानामलकाञ्शतपर्णांश्च किंशुकान्।
इङ्गुदान्करवीराश्च हरीतकीविभीतकान् ।।
एतानन्यांश्च सा वृक्षान्ददर्श पृथुलोचना।
तथैवाशोकपुनागकेतकीबकुलानथ ।।
पारिजातान्कोविदारान्मन्दारेन्दीवरास्तथा।
पाटलाः पुष्पिता रम्या देवदारुद्रुमास्तथा ।।
शालास्तालास्तमालाश्च निचुलॉल्लोमकास्तथा।
अन्यांश्च पादपश्रेष्ठानपश्यत्फलपुष्पितान् ।।
चकोरैः शतपत्रैश्च भृङ्गराजैस्तथा शुकैः।
कोकिलैः कलविङ्कैश्च हारीतैर्जीवजीवकैं ।।
प्रियपुत्रैश्चातकैश्च तथान्यैर्विविधैः खगैः।

श्रोत्ररम्य सुमधुर कूजद्भिश्चाप्यधिष्ठितम् ॥
सरासि च मनोज्ञानि प्रसन्नसलिलानि च ।
कुमुदै. पुण्डरीकैश्च तथा नीलोत्पलै. शुभै. ॥
कह्लारै. कमलैश्चैव आचितानि समन्तत. ।
कादम्बैश्चक्रवाकैश्च तथैव जलकुक्कुटै. ॥
कारण्डवैर्बकैर्हंसै कूर्मैर्मद्गुभिरेव च ।
एतैश्चान्यैश्च कीर्णानि समन्ताज्जलचारिभि· ॥
क्रमेणैव तथा सा तु वन बभ्राम तै सह ।
एव दृष्ट्वा वन रम्य तै. सार्धं परमाद्भुतम् ॥
विस्मयोत्फुल्लनयना सा बभूव वराङ्गना ।
प्रोवाच वायु काम च वसन्त च द्विजोत्तमा· ॥

प्रम्लोचोवाच ।

कुरुध्व मम साहाय्य यूय सर्वे पृथक्पृथक् ॥

ब्रह्मोवाच ।

एवमुक्त्वा तदा सा तु तथेत्युक्त्वा सुरैर्द्विजा. ।
प्रत्युवाचाद्य यास्यामि यत्रासौ सस्थितो मुनि. ॥
अद्य त देहयन्तार प्रयुक्तेन्द्रियवाजिनम् ।
स्मरशस्त्रगलद्रश्मि करिष्यामि कुसारथिम् ॥
ब्रह्मा जनार्दनो वापि यदि वा नीललोहित ।
तथाप्यद्य करिष्यामि कामबाणक्षतान्तरम् ॥
इत्युक्त्वा प्रययौ साथ यत्रासौ तिष्ठते मुनि. ।
मुनेस्तप प्रभावेण प्रशान्तश्वापदाश्रमम् ॥
सा पुस्कोकिलमाधुर्ये नदीतीरे व्यवस्थिता ।
स्तोकमात्र स्थिता तस्मादगायत वराप्सरा ॥
ततो वसन्त सहसा बल समकरोत्तदा ।
कोकिलारावमधुरमकालिकमनोहरम् ॥
ववौ गन्धवहश्चैव मलयाद्रिनिकेतनः ।
पुष्पानुच्चावचान्मेध्यान्पातयश्च शनैः शनै· ॥

पुष्पबाणधरश्चैव गत्वा तस्य समीपतः ।
मुनेश्च क्षोभयामास कामस्तस्यापि मानसम् ॥
ततो गीतध्वनिं श्रुत्वा मुनिर्विस्मितमानसः ।
जगाम यत्र सा सुभ्रूः कामबाणप्रपीडितः ॥
दृष्ट्वा तामाह सहृष्टो विस्मयोत्फुल्ललोचनः ॥
भ्रष्टोत्तरीयो विकलः पुलकाञ्चितविग्रहः ॥

ऋषिरुवाच ।

कासि कस्यासि सुश्रोणि सुभगे चारुहासिनि ।
मनो हरसि मे सुभ्रु ब्रूहि सत्यं सुमध्यमे ॥

प्रम्लोचोवाच ।

तव कर्मकरा चाहं पुष्पार्थमहमागता ।
आदेशं देहि मे क्षिप्रं किं करोमि तवाज्ञया ॥

व्यास उवाच ।

श्रुत्वैव वचनं तस्यास्त्यक्त्वा धैर्यं विमोहितः ।
आदाय हस्ते तां बालां प्रविवेश स्वमाश्रमम् ॥
ततः कामश्च वायुश्च वसन्तश्च द्विजोत्तमाः ।
जग्मुर्यथागतं सर्वे कृतकृत्यास्त्रिविष्टपम् ॥
शशंसुश्च हरिं गत्वा तस्यास्तस्य च चेष्टितम् ।
श्रुत्वा शक्रस्तदा देवाः प्रीताः सुमनसोऽभवन् ॥
स च कण्डुस्तया सार्धं प्रविशन्नेव चाश्रमम् ।
आत्मनः परमं रूपं चकार मदनाकृति ॥
रूपयौवनसंपन्नमतीव सुमनोहरम् ।
दिव्यालंकारसंयुक्तं षोडशवत्सराकृति ॥
दिव्यवस्त्रधरं कान्तं दिव्यस्रग्गन्धभूषितम् ।
सर्वोपभोगसंपन्नं सहसा तपसो बलात् ॥
दृष्ट्वा सा तस्य तद्वीर्यं परं विस्मयमागता ।
अहोऽस्य तपसो वीर्यमित्युक्त्वा मुदिताभवत् ॥

स्नान सध्या जप होम स्वाध्याय देवतार्चनम् ।
व्रतोपवासनियम ध्यान च मुनिसत्तमा. ।।
त्यक्त्वा स रेमे मुदितस्तया सार्धमहर्निशम् ।
मन्मथाविष्टहृदयो न बुबोध तप.क्षयम् ।।
सध्यारात्रिदिवापक्षमासर्त्वयनहायनम् ।
न बुबोध गत काल विषयासक्तमानस. ।।
सा च त कामजैर्भावैर्विदग्धा रहसि द्विजा ।
वरयामास सुश्रोणि प्रलापकुशला तदा ।।
एव कण्डुस्तया सार्धं वर्षाणामधिक शतम् ।
अतिष्ठन्मन्दरद्रोण्या ग्राम्यधर्मरतो मुनि. ।।
सा त प्राह महाभाग गन्तुमिच्छाम्यह दिवम् ।
प्रसादसुमुखो ब्रह्मन्ननुज्ञातु त्वमर्हसि ।।
तयैवमुक्तः स मुनिस्तस्यामासक्तमानसः ।
दिनानि कतिचिद्भद्रे स्थीयतामित्यभापत ।।
एवमुक्ता ततस्तेन साग्र वर्षशत पुन ।
बुभुजे विषयास्तन्वी तेन सार्धं महात्मना ।।
अनुज्ञा देहि भगवन्व्रजामि त्रिदशालयम् ।
उक्तस्तयेति स पुन. स्थीयतामित्यभाषत ।।
पुनर्गते वर्षशते साधिके सा शुभानना ।
याम्यह त्रिदिव ब्रह्मन्प्रणयस्मितशोभनम् ।।
उक्तस्तयैव स मुनि पुनराहायतेक्षणाम् ।
इहास्यतां मया सुभ्रु चिरं काल गमिष्यसि ।।
तच्छापभीता सुश्रोणी सह तेनर्षिणा पुन. ।
शतद्वय किचिदूनं वर्षाणां समतिष्ठत ।।
गमनाय महाभागो देवराजनिवेशनम् ।
प्रोक्तः प्रोक्तस्तया तन्व्या स्थीयतामित्यभाषत ।।
तस्य शापभयाद्भीरुर्दाक्षिण्येन च दक्षिणा ।
प्रोक्ता प्रणयभङ्गार्तिवेदिनी न जहौ मुनिम् ।।
तया च रमतस्तस्य परमर्षेरहर्निशम् ।
नवं नवमभूत्प्रेम मन्मथासक्तचेतस ।।

एकदा तु त्वरायुक्तो निश्चक्रामोटजान्मुनिः ।
निष्क्रामन्तं च कुत्रेति गम्यते प्राह सा शुभा ॥
इत्युक्तः स तया प्राह परिवृत्तमहः शुभे ।
सध्योपास्ति करिष्यामि क्रियालोपोऽन्यथा भवेत् ॥
ततः प्रहस्य मुदिता सा त प्राह महामुनिम् ।
किमद्य सर्वधर्मज्ञ परिवृत्तमहस्तव ।
गतमेतन्न कुरुते विस्मय कस्य कथ्यते ॥

मुनिरुवाच ।

प्रातस्त्वमागता भद्रे नदीतीरमिदं शुभम् ।
मया दृष्टासि सुश्रोणि प्रविष्टा च ममाश्रमम् ॥
इय च वर्तते सध्या परिणाममहो गतम् ।
अवहास किमर्थोऽय सद्भावः कथ्यतां मम ॥

प्रम्लोचोवाच ।

प्रत्यूषस्यागता ब्रह्मन्सत्यमेतन्न मे मृषा ।
कित्वद्य तस्य कालस्य गतान्यब्दशतानि ते ॥
ततः ससाध्वसो विप्रस्तां पप्रच्छायतेक्षणाम् ।
कथ्यतां भीरु कः कालस्त्वया मे रमतः सदा ॥

प्रम्लोचोवाच ।

सप्तोत्तराण्यतीतानि नववर्षशतानि च ।
मासाश्च षट् तथैवान्यत्समतीत दिनत्रयम् ॥

ऋषिरुवाच ।

सत्यं भीरु वदस्येतत्परिहासोऽथवा शुभे ।
दिनमेकमहं मन्ये त्वया सार्धमिहोषितम् ॥

प्रम्लोचोवाच ।

वदिष्याम्यनृतं ब्रह्मन्कथमत्र तवान्तिके ।
विशेषादद्य भवता पृष्टा मार्गानुगामिना ॥

व्यास उवाच ।

निशम्य तद्वचस्तस्याः स मुनिर्द्विजसत्तमाः ।
धिग्धिङ्मामित्यनाचारं विनिन्द्यात्मानमात्मना ॥

मुनिरुवाच ।

तपांसि मम नष्टानि हतं ब्रह्मविदां धनम् ।
हृतो विवेकः केनापि योषिन्मोहाय निर्मिता ॥
ऊर्मिषट्कातिगं ब्रह्म ज्ञेयमात्मजयेन मे ।
मतिरेषा कृता येन धिक्तं काममहाग्रहम् ॥
व्रतानि सर्ववेदाश्च कारणान्यखिलानि च ।
नरकग्राममार्गेण कामेनाद्य हतानि मे ॥
विनिन्द्येत्थं स धर्मज्ञः स्वयमात्मानमात्मना ।
तामप्सरसमासीनामिदं वचनमब्रवीत् ॥

ऋषिरुवाच ।

गच्छ पापे यथाकामं यत्कार्यं तत्त्वया कृतम् ।
देवराजस्य यत्क्षोभं कुर्वन्त्या भावचेष्टितैः ॥
न त्वां करोम्यहं भस्म क्रोधतीव्रेण वह्निना ।
सतां साप्तपदं मैत्र्यमुषितोऽहं त्वया सह ॥
अथवा तव दोषः कः किं वा कुर्यामिहं तव ।
ममैव दोषो नितरां येनाहमजितेन्द्रियः ॥
यया शक्रप्रियार्थिन्या कृतो मत्तपसो व्ययः ।
त्वया दृष्टिमहामोहमनुनाहं जुगुप्सितः ॥

व्यास उवाच ।

यावदित्थं स विप्रर्षिस्तां ब्रवीति सुमध्यमाम् ।
तावत्स्खलत्स्वेदजला सा बभूवातिवेपथुः ॥
प्रवेपमानां स च तां स्विन्नगात्रलतां सतीम् ।
गच्छ गच्छेति सक्रोधमुवाच मुनिसत्तमः ॥
सा तु निर्भर्त्सिता तेन विनिष्क्रम्य तदाश्रमात् ।
आकाशगामिनी स्वेदं ममार्ज तरुपल्लवैः ॥

वृक्षाद्वृक्षं ययौ बाला उदग्रारुणपल्लवै. ।
निर्ममार्ज च गात्राणि गलत्स्वेदजलानि वै ।।
ऋषिणा यस्तदा गर्भस्तस्या देहे समाहितः ।
निर्जगाम सरोमाञ्चस्वेदरूपी तदङ्गतः ।।
त वृक्षा जगृहुर्गर्भमेक चक्रे च मारुतः ।
सोमेनाप्यायितो गोभिः स तदा ववृधे शनैः ।।
मारिषा नाम कन्याभूद्वृक्षाणा चारुलोचना ।
प्राचेतसाना सा भार्या दक्षस्य जननी द्विजा. ।।
स चापि भगवान्कण्डुः क्षीणे तपसि सत्तम. ।
पुरुषोत्तमाख्य भो विप्रा विष्णोरायतनं ययौ ।।
दर्दश परमं क्षेत्रं मुक्तिद भुवि दुर्लभम् ।
दक्षिणस्योदधेस्तीरे सर्वकामफलप्रदम् ।।
सुरम्य वालुकाकीर्णं केतकीवनशोभितम् ।
नानाद्रुमलताकीर्णं नानापक्षिरुतं शिवम् ।।
सर्वत्र सुखसचार सर्वर्तुकुसुमान्वितम् ।
सर्वसौख्यप्रद नृणा धन्य सर्वगुणाकरम् ।।
भृग्वाद्यै· सेवित पूर्वं मुनिसिद्धवरैस्तथा ।
गन्धर्वै. किनरैर्यक्षैस्तथान्यैर्मोक्षकाङ्क्षिभिः ।।
ददर्श च हरिं तत्र देवैः सर्वैरलकृतम् ।
ब्राह्मणाद्यैस्तथा वर्णैराश्रमस्थैर्निषेवितम् ।।
दृष्ट्वै व स तदा क्षेत्रं देव च पुरुषोत्तमम् ।
कृतकृत्यमिवात्मान मेने स मुनिसत्तमः ।।

# चिरकारिब्राह्मणवृत्तान्तः

(स्कन्दपु०, कुमारिकाखण्ड ६)

चिरकारी महाप्राज्ञो गौतमस्याभवत्सुत ।
चिरेण सर्वकार्याणि यो विमृश्य प्रपद्यते ।।
चिरकार्याभिसंपत्तेश्चिरकारी तथोच्यते ।
अलसग्रहण प्राप्तो दुर्मेधावी तथोच्यते ।।
बुद्धिलाघवयुक्तेन जनेनादीर्घदर्शिना ।
व्यभिचारेण कस्मिन्स व्यतिक्रम्यापरान्सुतान् ।।
पित्रोक्त. कुपितेनाथ जहीमा जननीमिति ।
स तथेति चिरेणोक्त. स्वभावाच्चिरकारक ।।
विमृश्य चिरकारित्वाच्चिन्तयामास वै चिरम् ।
पितुराज्ञा कथ कुर्यां न हन्या मातर कथम् ।
कथ धर्मच्छलेनास्मिन्निमज्जेयमसाधुवत् ।।
पितुराज्ञा परो धर्मो ह्यधर्मो मातृरक्षणम् ।
अस्वतन्त्र च पुत्रत्व कि तु मा नात्र पीडयेत् ।।
स्त्रियं हत्वा मातर च को हि जातु सुखी भवेत् ।
पितरं चाप्यवज्ञाय क· प्रतिष्ठामवाप्नुयात् ।।
अनवज्ञा पितुर्युक्ता युक्त मातुश्च रक्षणम् ।
क्षमायोग्यावुभावेतौ नातिवर्तेत वै कथम् ।।
पिता ह्यात्मानमाधत्ते जायाया जज्ञिवानिति ।
शीलचारित्रगोत्रस्य धारणार्थं कुलस्य च ।
सोऽहमात्मा स्वय पित्रा पुत्रत्वे परिकल्पित· ।।
जातकर्मणि यत्प्राह पिता यच्चोपकर्मणि ।
पर्याप्त स दृढीकार. पितुर्गौरवलिप्सया ।।
शरीरादीनि देयानि पिता त्वेक· प्रयच्छति ।
तस्मात्पितुर्वच. कार्यं न विचार्यं कथचन ।
पातकान्यपि चूर्यन्ते पितुर्वचनकारिण ।।

पिता स्वर्ग. पिता धर्म पिता परमकं तपः ।
पितरि प्रीतिमापन्ने सर्वाः प्रीणन्ति देवता. ।।
आशिषस्ता भजन्त्येनं पुरुष प्राह य· पिता ।
निष्कृति. सर्वपापाना पिता यदभिनन्दति ।।
मुच्यते बन्धनात्पुष्प फल वृन्तात्प्रमुच्यते ।
क्लिश्यन्नपि सुतः स्नेह पिता स्नेह न मुञ्चति ।।
एतद्विचिन्त्यते तावत्पुत्रस्य पितृगौरवम् ।
पिता नाल्पतर स्थान चिन्तयिष्यामि मातरम् ।।
यो ह्यय मयि सघातो मर्त्यत्वे पाञ्चभौतिकः ।
अस्य मे जननी हेतु. पावकस्य यथारणि. ।।
माता देहारणि. पुसः सर्वस्यार्थस्य निर्वृति ।
मातृलाभे सनाथत्वमनाथत्व विपर्यये ।।
न स शोचति नाप्येन स्थाविर्यमपि कर्षति ।
श्रिया हीनोऽपि यो गेहे अम्बेति प्रतिपद्यते ।।
पुत्रपौत्रसमापन्नो जननी य. समाश्रित· ।
अपि वर्षशतस्यान्ते स द्विहायनवच्चरेत् ।।
समर्थं वासमर्थं वा कृश वाप्यकृश तदा ।
रक्षयेच्च सुत माता नान्यः पोष्यविधानत ।।
तदा स वृद्धो भवति तदा भवति दु खितः ।
तदा शून्य जगत्तस्य यदा मात्रा वियुज्यते ।।
नास्ति मातृसमाच्छाया नास्ति मातृसमा गतिः ।
नास्ति मातृसम त्राण नास्ति मातृसमा प्रभा ।।
कुक्षिसधारणाद्धात्री जननाज्जननी तथा ।
अङ्गाना वर्धनादम्बा वीरसूत्वे च वीरसू. ।
शिशोः शुश्रूषणाच्छुश्रूर्माता स्यान्माननात्तथा ।।
देवताना समावापमेकत्वं पितर विदुः ।
मर्त्याना देवताना च पूगो नात्येति मातरम् ।।
पतिता गुरवस्त्याज्या माता च न कथंचन ।
गर्भधारणपोषाभ्या तेन माता गरीयसी ।।
एवं स कौशिकीतीरे बलिं राजानमीक्षतीम् ।

स्त्रीवृत्त्या चिरकालत्वाद्धन्तु दिष्टः स्वमातरम् ।
विमृश्य चिरकालं हि चिन्तान्त नाभ्यपद्यत ।।
एतस्मिन्नन्तरे शक्रो ब्राह्मणं रूपमास्थितः ।
गायन्गाथामुपायात. पितुस्तस्याश्रमान्तिके ।।
अनृता हि स्त्रियः सर्वा. सूत्रकारो यदब्रवीत् ।
अतस्ताभ्य फल ग्राह्य न स्याद्दोषेक्षण सुधी. ।।
इति श्रुत्वा तमानर्च मेधातिथिरुदारधी. ।
दु खितश्चिन्तयन्प्राप्तो भृशमश्रूणि वर्तयन् ।।
अहोऽहमीर्ष्ययाक्षिप्तो मग्नोऽह दु खसागरे ।
हत्वा नारी च साध्वी च को नु मा तारयिष्यति ।।
सत्वरेण मयाज्ञप्तश्चिरकारी ह्युदारधी ।
यद्ययं चिरकारी स्यात्स मा त्रायेत पातकात् ।।
चिरकारिक भद्र ते भद्र ते चिरकारिक ।
यदद्य चिरकारी त्वं ततोऽसि चिरकारिक ।।
त्राहि मां मातरं चैव तपो यच्चार्जित मया ।
आत्मान पातके विष्टं शुभाह्व चिरकारिक ।।
एवं स दु खित प्राप्तो गौतमोऽचिन्तयत्तदा ।
चिरकारिक ददर्शाथ पुत्रं मातुरुपान्तिके ।।
चिरकारी तु पितर दृष्ट्वा परमदु खित ।
शस्त्र त्यक्त्वा स्थितो मूर्ध्ना प्रसादायोपचक्रमे ।।
मेधातिथि सुत दृष्ट्वा शिरसा पतितं भुवि ।
पत्नी चैव तु जीवन्ती परामभ्यगमन्मुदम् ।।
हन्यादिति न सा वेद शस्त्रपाणौ स्थिते सुते ।
बुद्धिरासीत्सुत दृष्ट्वा पितुश्चरणयोर्नतम् ।
शस्त्रग्रहणचापल्यं संवृणोति भयादिति ।।
तत. पित्रा चिर स्मृत्वा चिर चाघ्राय मूर्धनि ।
चिर दोर्भ्यां परिष्वज्य चिरं जीवेत्युदाहृत. ।।
चिरं मुदान्वित पुत्र मेधातिथिरथाब्रवीत् ।
चिरकारिक भद्र ते चिरकारी भवेच्चिरम् ।।
चिराय यत्कृतं सौम्य चिरमस्मिन्न दु खित ।

गाथाश्चाप्यब्रवीद्विद्वान्गौतमो मुनिसत्तमः ।।
चिरेण मन्त्र सधीयाच्चिरेण च कृत त्यजेत् ।
चिरेण विहित मित्र चिर धारणमर्हति ।।
रोगे दर्पे च माने च द्रोहे पापे च कर्मणि ।
अप्रिये चैव कर्तव्ये चिरकारी प्रशस्यते ।।
बन्धूना सुहृदा चैव भृत्याना स्त्रीजनस्य च ।
अव्यक्तेष्वपराधेषु चिरकारी प्रशस्यते ।।
चिरं धर्मान्निषेवेत कुर्याच्चान्वेषण चिरम् ।
चिरमन्वास्य विदुषश्चिरमिष्टानुपास्य च ।
चिरं विनीय चात्मानं चिर यात्यनवज्ञताम् ।।
ब्रुवतश्च परस्यापि वाक्यं धर्मोपसंहितम् ।
चिर पृच्छेच्च शृणुयाच्चिर न परिभूयते ।।
धर्मे शत्रौ शत्रुहस्ते पात्रे च निकटस्थिते ।
भये च साधुपूजाया चिरकारी न शस्यते ।।
एवमुक्त्वा पुत्रभार्यासहितः प्राप्य चाश्रमम् ।
ततश्चिरमुपास्याथ दिव यातश्चिरं मुनिः ।।

# ब्रह्मसंपादितो राधाकृष्णविवाहः

(ब्रह्मवैवर्तपु०, कृष्णजन्मखण्ड १५)

नारायण उवाच।

एकदा कृष्णसहितो नन्दो वृन्दावन ययौ।
तत्रोपवनभाण्डीरे चारयामास गोधनम्॥
सर सु स्वादु तोय च पाययामास तत्पपौ।
उवास वृक्षमूले च बाल कृत्वा स्ववक्षसि॥
एतस्मिन्नन्तरे कृष्णो मायामानुषविग्रह.।
चकार माययाकस्मान्मेघाच्छन्न नभो मुने॥
मेघावृत नभो दृष्ट्वा श्यामल काननान्तरम्।
झञ्झावात मेघशब्द वज्रशब्द च दारुणम्॥
वृष्टिधारामतिस्थूला कम्पमानाश्च पादपान्।
दृष्ट्वैव पतितस्कन्धान्नन्दो भयमवाप ह॥
कथ यास्यामि गोवत्सान्विहाय स्वाश्रम बत।
गृह यदि न यास्यामि भविता बालकस्य किम्॥
एव नन्दे प्रवदति रुरोद श्रीहरिस्तदा।
पयोभिया हरिश्चैव पितु कण्ठ दधार स·॥
एतस्मिन्नन्तरे राधा जगाम कृष्णसनिधिम्।
गमन कुर्वती राजहसखञ्जनगञ्जनम्॥
शरत्पार्वणचन्द्राभामुष्टवक्त्रमनोहरा।
शरन्मध्याह्नपद्मानां शोभामोचनलोचना॥
परितस्तारकापक्ष्मविचित्रकज्जलोज्ज्वला।
खगेन्द्रचञ्चुचारुश्रीशसानाशकनासिका॥
तन्मध्यस्थलशोभार्हस्थूलमुक्ताफलोज्ज्वला।
कबरीवेषसयुक्ता मालतीमाल्यवेष्टिता॥
ग्रीष्ममध्याह्नमार्तण्डप्रभमुष्टिककुण्डला।
पक्वबिम्बफलाना च श्रीमुष्टाधरयुग्मका॥

मुक्तापङ्क्तिप्रभातैकदन्तपङ्क्तिसमुज्ज्वला ।
ईषत्प्रफुल्लकुन्दानां सुप्रभानाशकस्मिता ।।
कस्तूरीबिन्दुसयुक्तसिन्दूरबिन्दुभूषिता ।
कपालं मल्लिकायुक्त विभ्रती श्रीयुत सती ।।
सुचारुवर्तुलाकारकपोलपुलकान्विता ।
मणिरत्नेन्द्रसाराणां हारोर स्थलभूषिता ।।
सुचारुश्रीफलयुगकठिनस्तनसगता ।
पत्रावलीश्रियायुक्ता दीप्ता सद्रत्नतेजसा ।।
सुचारुवर्तुलाकारमुदर सुमनोहरम् ।
विचित्रत्रिवलीयुक्तं निम्ननाभि च विभ्रती ।।
सद्रत्नसाररचितमेखलाजालभूषिता ।
कामास्त्रसारभ्रूभङ्गयोगीन्द्रचित्तमोहिनी ।।
कठिनश्रोणियुगल धरणीधरनिन्दितम् ।
स्थलपद्मप्रभामुष्टचरण दधती मुदा ।।
रत्नभूषणसयुक्तं यावकद्रवसंयुतम् ।
मणीन्द्रशोभासमुष्टसालक्तकपुनर्भवम् ।।
सद्रत्नसाररचितक्वणन्मञ्जीररञ्जितम् ।
रत्नकङ्कणकेयूरचारुशङ्खविभूषिता ।।
रत्नाङ्गुलीयनिकरवह्निशुद्धांशुकोज्ज्वला ।
चारुचम्पकपुष्पाणा प्रभामुष्टकलेवरा ।।
सहस्रदलसयुक्तक्रीडाकमलमुज्ज्वलम् ।
श्रीमुखश्रीदर्शनार्थं बिभ्रती रत्नदर्पणम् ।।
दृष्ट्वा ता निर्जने नन्दो विस्मय परम ययौ ।
चन्द्रकोटिप्रभामुष्टा भासयन्ती दिशो दश ।।
ननाम ता साश्रुनेत्रो भक्तिनम्रात्मकधरः ।
जानामि त्वा गर्गमुखात्पद्माधिकप्रिया हरे. ।।
जानामीम महाविष्णो. पर निर्गुणमच्युतम् ।
तथापि मोहितोऽह च मानवो विष्णुमायया ।।
गृहाण प्राणनाथं च गच्छ भद्रे यथासुखम् ।
पश्चाद्दास्यसि मत्पुत्र कृत्वा पूर्णमनोरथम् ।।

इत्युक्त्वा प्रददौ तस्यै रुदन्त बालक भिया ।
जग्राह बालक राधा जहास मधुर सुखात् ।।
उवाच नन्द सा यत्नान्न प्रकाश्य रहस्यकम् ।
अह दृष्टा त्वया नन्द कतिजन्मफलोदयात् ।।
प्राज्ञस्त्व गर्गवचनात्सर्वं जानासि कारणम् ।
अकथ्यमावयोर्गोप्य चरित गोकुले व्रज ।।
वर वृणु व्रजेश त्व यत्ते मनसि वाञ्छितम् ।
ददामि लीलया तुभ्य देवानामपि दुर्लभम् ।।
राधिकावचन श्रुत्वा तामुवाच व्रजेश्वर ।
युवयोश्चरणे भक्ति देहि नान्यत्र मे स्पृहा ।।
युवयो सनिधौ वास दास्यसि त्व सुदुर्लभम् ।
आवाभ्या देहि जगतामम्बिके परमेश्वरि ।।
श्रुत्वा नन्दस्य वचनमुवाच परमेश्वरी ।
दास्यामि दास्यमतुलमिदानी भक्तिरस्तु ते ।।
आवयोश्चरणाम्भोजे युवयोश्च दिवानिशम् ।
प्रफुल्लहृदये शश्वत्स्मृतिरस्तु सुदुर्लभा ।।
माया युवा च प्रच्छन्नौ न करिष्यति मद्वरात् ।
गोलोके यास्यथान्ते च विहाय मानवी तनुम् ।।
एवमुक्त्वा तु सानन्द कृत्वा कृष्ण स्ववक्षसि ।
दूर निनाय श्रीकृष्ण बाहुभ्या च यथेप्सितम् ।।
कृत्वा वक्षसि तं कामाच्छ्लेष श्लेष चुचुम्ब च ।
पुलकाङ्कितसर्वाङ्गी सस्मार रासमण्डलम् ।।
एतस्मिन्नन्तरे राधा मायासद्रत्नमण्डपम् ।
ददर्श रत्नकलशशतेन च समन्वितम् ।।
नानाविचित्रचित्राढ्य चित्रकाननशोभितम् ।
सिन्दूराकारमणिभि स्तम्भसघैर्विराजितम् ।।
चन्दनागुरुकस्तूरीकुङ्कुमद्रवयुक्तया ।
सयुक्त मालतीमालासमूहपुष्पशय्यया ।।
नानाभोगसमायुक्त दिव्यदर्पणसयुतम् ।
मणीन्द्रमुक्तामाणिक्यमालाजालैर्विभूषितम् ।।

मणीन्द्रसाररचितकपाटेन समन्वितम् ।
भूषित भूषितैर्वस्त्रै· पताकानिकरैर्वरैः ।।
कुङ्कुमाकारमणिभिः सप्तसोपानसयुतम् ।
युक्त षट्पदसयुक्तै. पुष्पोद्यान च पुष्पितै. ।।
सा देवी मण्डप दृष्ट्वा जगामाभ्यन्तर मुदा ।
ददर्श तत्र ताम्बूल कर्पूरादिसमन्वितम् ।।
जल च रत्नकुम्भस्थं स्वच्छं शीत मनोहरम् ।
सुधामधुभ्या पूर्णानि रत्नकुम्भानि नारद ।।
पुरुषं कमनीय च किशोरं श्यामसुन्दरम् ।
कोटिकन्दर्पलीलाभ चन्दनेन विभूपितम् ।।
शयान पुष्पशय्यायां सस्मितं सुमनोहरम् ।
पीतवस्त्रपरीधानं प्रसन्नवदनेक्षणम् ।।
मणीन्द्रसारनिर्माणं क्वणन्मञ्जीररञ्जितम् ।
सद्रत्नसारनिर्माणकेयूरवलयान्वितम् ।।
मणीन्द्रकुण्डलाभ्यां च गण्डस्थलविराजितम् ।
कौस्तुभेन मणीन्द्रेण वक्ष.स्थलसमुज्ज्वलम् ।।
शरत्पार्वणचन्द्रास्यप्रभामुष्टमुखोज्ज्वलम् ।
शरत्प्रफुल्लकमलप्रभामोचनलोचनम् ।।
मालतीमाल्यसंश्लिष्टशिखिपिच्छसुशोभितम् ।
त्रिवङ्कचूडा बिभ्रन्त पश्यन्त रत्नमन्दिरम् ।।
क्रोड बालकशून्यं च दृष्ट्वा त नवयौवनम् ।
सर्वस्मृतिस्वरूपा सा तथापि विस्मय ययौ ।।
रूप रासेश्वरी दृष्ट्वा मुमोह सुमनोहरम् ।
कामाच्चक्षुश्चकोराभ्यां मुखचन्द्र पपौ मुदा ।।
निमेषरहिता राधा नवसगमलालसा ।
पुलकाङ्कितसर्वाङ्गी सस्मिता मदनातुरा ।।
तामुवाच हरिस्तत्र स्मेराननसरोरुहाम् ।
नवसंगमयोग्यां च पश्यन्ती वक्रचक्षुषा ।।

श्रीकृष्ण उवाच ।

राधे स्मरसि गोलोकवृत्तान्त सुरससदि ।
अद्य पूर्णं करिष्यामि स्वीकृत यत्पुरा प्रिये ।।
त्व मे प्राणाधिका राधे प्रेयसी च वरानने ।
यथा त्व च तथाह च भेदो हि नावयोर्ध्रुवम् ।।
यथा क्षीरे च धावल्य यथाग्नौ दाहिका सति ।
यथा पृथिव्या गन्धश्च तथाह त्वयि संततम् ।।
कृष्ण वदन्ति मा लोकास्त्वयैव रहित यदा ।
श्रीकृष्ण च तदा तेऽपि त्वयैव सहित परम् ।।
त्व च श्रीस्त्व च सपत्तिस्त्वमाधारस्वरूपिणी ।
त्व स्त्री पुमानह राधे इति वेदेषु निर्णय. ।
सर्वशक्तिस्वरूपासि सर्वरूपोऽहमक्षर. ।।
यदा तेज स्वरूपोऽह तेजोरूपासि त्वं तदा ।
न शरीरी यदाह च तदा त्वमशरीरिणी ।।
सर्वबीजस्वरूपोऽहं सदा योगेन सुन्दरि ।
त्व च शक्तिस्वरूपा च सर्वस्त्रीरूपधारिणी ।।
ममाङ्गाशस्वरूपा त्व मूलप्रकृतिरीश्वरी ।
शक्त्या बुद्धया च ज्ञानेन मया तुल्या वरानने ।।
आवयोर्भेदबुद्धि च य करोति नराधम ।
तस्य वास. कालसूत्रे यावच्चन्द्रदिवाकरौ ।।
पूर्वान्सप्त परान्सप्त पुरुषान्पातयत्यध· ।
कोटिजन्मार्जित पुण्य तस्य नश्यति निश्चितम् ।।
अज्ञानादावयोर्निन्दा ये कुर्वन्ति नराधमा· ।
पच्यन्ते नरके घोरे यावच्चन्द्रदिवाकरौ ।।
राशब्दं कुर्वतस्त्रस्तो ददामि भक्तिमुत्तमाम् ।
धाशब्द कुर्वत· पश्चाद्यामि श्रवणलोभतः ।।
ये सेवन्ते च दत्त्वा मामुपचाराश्च षोडश ।
यावज्जीवनपर्यन्त या प्रीतिर्जायते मम ।।
सा प्रीतिर्मम जायेत राधाशब्दात्ततोऽधिका ।
प्रिया न मे तथा राधे राधावक्ता ततोऽधिक. ।।

ब्रह्मानन्तः शिवो धर्मो नरनारायणावृपी ।
कपिलश्च गणेशश्च कार्तिकेयश्च मत्प्रियः ।।
लक्ष्मीः सरस्वती दुर्गा सावित्री प्रकृतिस्तथा ।
मम प्रियाश्च देवाश्च तास्तथापि न तत्समाः ।।
ते सर्वे प्राणतुल्या मे त्वं मे प्राणाधिका सती ।
भिन्नस्थानस्थितास्ते च त्वं च वक्ष.स्थले स्थिता ।।
या मे चतुर्भुजा मूर्तिर्बिभर्ति वक्षसि प्रियाम् ।
सोऽहं कृष्णस्वरूपस्त्वा विवहामि स्वय सदा ।।
इत्येवमुक्त्वा श्रीकृष्णस्तस्थौ तल्पे मनोरमे ।
उवाच राधिका नाथं भक्तिनम्रात्मकधरा ।।

राधिकोवाच ।

स्मरामि सर्वं जानामि विस्मरामि कथं विभो ।
यत्त्व वदसि सर्वाह त्वत्पादाब्जप्रसादत. ।।
ईश्वरस्याप्रियाः केचित्प्रियाश्च कुत्र केचन ।
ये यथा मां न स्मरन्ति तथा तेषु तवाकृपा ।।
तृण च पर्वत कर्तुं समर्थः पर्वत तृणम् ।
तथापि योग्यायोग्ये च संपत्तौ च समा कृपा ।।
तिष्ठन्त्यह शयानस्त्व कथाभिर्यत्क्षण गतम् ।
तत्क्षण च युगसम नाह प्रापयितु क्षमा ।।
वक्षःस्थले च शिरसि देहि ते चरणाम्बुजम् ।
दुनोति मन्मनः सद्यस्त्वदीयविरहानलात् ।।
पुरः पपात मे दृष्टिस्त्वदीयचरणाम्बुजे ।
नीता मया न हि क्लेशाद्द्रष्टुमन्यत्कलेवरम् ।।
प्रत्येकमङ्ग दृष्ट्वैव दत्ता शान्ते मुखाम्बुजे ।
दृष्ट्वा मुखारविन्दं च नान्य गन्तु च सा क्षमा ।।
राधिकावचन श्रुत्वा जहास पुरुषोत्तमः ।
तामुवाच हित तथ्यं श्रुतिस्मृतिनिरूपितम् ।।

श्रीकृष्ण उवाच।

यदेवाचरण यत्र देशे जन्मनि वा प्रिये।
न खण्डनीय तत्तत्र मया पूर्वं निरूपितम्॥
तिष्ठ भद्रे क्षण भद्र करिष्यामि तव प्रिये।
त्वन्मनोरथपूर्णस्य स्वय काल समागत.॥
यस्य यल्लिखित पूर्वं यत्र काले निरूपितम्।
तदेव खण्डितु राधे क्षमो नाहं च को विधि॥
विधातुश्च विधाताहं येषा यल्लेखन कृतम्।
ब्रह्मादीना च क्षुद्राणा न तत्खण्ड्य कदाचन॥
एतस्मिन्नन्तरे ब्रह्माजगाम पुरतो हरेः।
मालाकमण्डलुकर ईषत्स्मेरचतुर्मुखः॥
गत्वा ननाम तं कृष्णं प्रतुष्टाव यथागमम्।
साश्रुनेत्र पुलकितो भक्तिनम्रात्मकंधरः॥
स्तुत्वा नत्वा जगद्धाता जगाम हरिसनिधिम्।
पुनर्नत्वा प्रभु भक्त्या जगाम राधिकान्तिकम्॥
मूर्ध्ना ननाम भक्त्या च मातुस्तच्चरणाम्बुजे।
चकार सम्भ्रमेणैव जटाजालेन वेष्टितम्॥
कमण्डलुजलेनैव शीघ्र प्रक्षालित मुदा।
यथागम प्रतुष्टाव पुटाञ्जलियुत पुन॥

ब्रह्मोवाच।

हे मातस्त्वत्पदाम्भोज दृष्टं कृष्णप्रसादत·।
सुदुर्लभ च सर्वेषा भारते च विशेषतः॥
षष्टिवर्षसहस्राणि तपस्तप्त पुरा मया।
भास्करे पुष्करे तीर्थे कृष्णस्य परमात्मन·॥
आजगाम वर दातु वरदाता हरिः स्वयम्।
वर वृणीष्वेत्युक्ते च स्वाभीष्टं च वृतं मुदा॥
राधिकाचरणाम्भोजं सर्वेषामपि दुर्लभम्।
हे गुणातीत मे शीघ्रमधुनैव प्रदर्शय॥

मयेत्युक्तो हरिरयमुवाच मां तपस्विनम् ।
दर्शयिष्यामि काले च वत्सेदानी क्षमेति च ।।
न हीश्वराज्ञा विफला तेन दृष्टं पदाम्बुजम् ।
सर्वेषां वाञ्छित मातर्गोलोके भारतेऽधुना ।।
सर्वा देव्यः प्रकृत्यशा जन्याः प्राकृतिका ध्रुवम् ।
त्वं कृष्णाङ्गार्धसभूता तुल्या कृष्णेन सर्वतः ।।
श्रीकृष्णस्त्वमयं राधा त्व राधा वा हरिः स्वयम् ।
न हि वेदेषु मे दृष्ट इति केन निरूपितम् ।।
ब्रह्माण्डाद्बहिरूर्ध्वं च गोलोकोऽस्ति यथाम्बिके ।
वैकुण्ठश्चाप्यजन्यश्च त्वमजन्या तथाम्बिके ।।
यथा समस्तब्रह्माण्डे श्रीकृष्णाशांशजीविन. ।
तथा शक्तिस्वरूपा त्व तेषु सर्वेषु संस्थिता ।।
पुरुषाश्च हरेरशास्त्वदंशा निखिलाः स्त्रियः ।
आत्मायं देहरूपा त्वमस्याधारस्त्वमेव हि ।।
अस्यानुप्राणैस्त्व मातस्त्वत्प्राणैरयमीश्वरः ।
किमहो निर्मितः केन हेतुना शिल्पकारिणा ।।
नित्योऽय च तथा कृष्णस्त्व च नित्या तथाम्बिके ।
अस्याशा त्व त्वदंशो वाप्यय केन निरूपितः ।।
अहं विधाता जगता देवाना जनकः स्वयम् ।
त पठित्वा गुरुमुखाद्भवन्त्येव बुधा जनाः ।।
गुणाना वास्तवाना ते शताश वक्तुमक्षमः ।
वेदो वा पण्डितो वान्यः को वा त्वां स्तोतुमीश्वरः ।।
स्तवाना जनक ज्ञान बुद्धिर्ज्ञानाम्बिका सदा ।
त्वं बुद्धेर्जननी मातः को वा त्वा स्तोतुमीश्वरः ।।
यद्वस्तु दृष्ट सर्वेषां तद्धि वक्तु बुधः क्षम· ।
यददृष्टाश्रुत वस्तु तन्निर्वक्तु च कः क्षमः ।।
अहं महेशोऽनन्तश्च स्तोतु त्वा कोऽपि न क्षमः ।
सरस्वती च वेदाश्च क्षमः कः स्तोतुमीश्वरः ।।
यथागमं तथोक्त च न मा निन्दितुमर्हसि ।
ईश्वराणामीश्वरस्य योग्यायोग्ये समा कृपा ।।

जनस्य प्रतिपाल्यस्य क्षणे दोष. क्षणे गुण. ।
जननी जनको यो वा सर्वं क्षमति स्नेहतः ।।
इत्युक्त्वा जगता धाता तस्थौ च पुरतस्तयो. ।
प्रणम्य चरणाम्भोजं सर्वेषा वन्द्यमीप्सितम् ।।
ब्रह्मणा च कृत स्तोत्र त्रिसध्य य. पठेन्नरः ।
राधामाधवयो पादे भक्तिर्दास्य लभेद्ध्रुवम् ।।
कर्मनिर्मूलन कृत्वा मृत्यु जित्वा सुदुर्जयम् ।
विलङ्घ्य सर्वलोकाश्च याति गोलोकमुत्तमम् ।।

नारायण उवाच ।

ब्रह्मण स्तवनं श्रुत्वा तमुवाच ह राधिका ।
वर वृणु विधातस्त्व यत्ते मनसि वर्तते ।।
राधिकावचन श्रुत्वा तामुवाच जगद्विधिः ।
वर च युवयो पादपद्मभक्ति च देहि मे ।।
इत्युक्ते विधिना राधा तूर्णमोमित्युवाच ह ।
पुनर्ननाम ता भक्त्या विधाता जगता पतिः ।।
तदा ब्रह्मा तयोर्मध्ये प्रज्वाल्य च हुताशनम् ।
हरि सस्मृत्य हवन चकार विधिना विधि ।।
उत्थाय शयनात्कृष्ण उवास वह्निसनिधौ ।
ब्रह्मणोक्तेन विधिना चकार हवन स्वयम् ।।
प्रणमय्य पुन कृष्णं राधा ता जनक स्वयम् ।
कौतुक कारयामास सप्तधा च प्रदक्षिणम् ।।
पुन प्रदक्षिण राधां कारयित्वा हुताशनम् ।
प्रणमय्य तत· कृष्णं वासयामास त विधि· ।।
तस्या हस्त च श्रीकृष्ण ग्राहयामास तं विधि· ।
वेदोक्तसप्तमन्त्राश्च पाठयामास माधवम् ।।
सस्थाप्य राधिकाहस्तं हरेर्वक्षसि वेदवित् ।
श्रीकृष्णहस्त राधाया पृष्ठदेशे प्रजापति· ।
स्थापयामास मन्त्रास्त्रीन्पाठयामास राधिकाम् ।।
पारिजातप्रसूनानां माला जानुविलम्बिताम् ।

श्रीकृष्णस्य गले ब्रह्मा राधाद्वारा ददौ मुदा ।।
प्रणमय्य पुनः कृष्ण राधां च कमलोद्भव ।
राधागले हरिद्वारा ददौ मालां मनोहराम् ।।
पुनश्च वासयामास श्रीकृष्णं कमलोद्भवः ।
तद्वामपार्श्वे राधा च सस्मिता कृष्णचेतसम् ।।
पुटाञ्जलि कारयित्वा माधवं राधिका विधिः ।
पाठयामास वेदोक्तान्पञ्च मन्त्रांश्च नारद ।।
प्रणमय्य पुन. कृष्ण समर्प्य राधिकां विधिः ।
कन्यका च यथा तातो भक्त्या तस्थौ हरेः पुरः ।।
एतस्मिन्नन्तरे देवाः सानन्दपुलकोद्गमाः ।
दुन्दुभि वादयामासुश्चानक मुरजादिकम् ।।
पारिजातप्रसूनाना पुष्पवृष्टिर्बभूव ह ।
जगुर्गन्धर्वप्रवरा ननृतुश्चाप्सरोगणाः ।।
तुष्टाव श्रीहरि ब्रह्मा तमुवाच ह सस्मितः ।
युवयोश्चरणाम्भोजे भक्ति मे देहि दक्षिणाम् ।।
ब्रह्मणो वचन श्रुत्वा तमुवाच हरिः स्वयम् ।
मदीयचरणाम्भोजे सुदृढा भक्तिरस्तु ते ।।
स्वस्थान गच्छ भद्र ते भविता नात्र सशयः ।
मया नियोजित कर्म कुरु वत्स ममाज्ञया ।।

# यमयमीसंवादः

(नरसिहपु० १३)

शुक उवाच ।

नराणां दृढचित्तानामकार्यं नेह कुर्वताम् ।
यत्पुण्यमृषिभिः प्रोक्त तन्मे वद महामते ।।

व्यास उवाच ।

नराणा दृढचित्तानामिह लोके परत्र च ।
पुण्यं यत्स्यान्मुनिश्रेष्ठ तन्मे निगदत· शृणु ।।
अत्रैवोदाहरन्तीममितिहास पुरातनम् ।
यम्या च सह सवादं यमस्य च महात्मनः ।।
विवस्वानदिते. पुत्रस्तस्य पुत्रौ सुवर्चसौ ।
जज्ञाते स यमश्चैव यमी चापि यवीयसी ।।
तौ तत्र सविवर्द्धेते पितुर्भवन उत्तमे ।
क्रीडमानौ स्वभावेन स्वच्छन्दगमनावुभौ ।
यमी यम समासाद्य स्वसा भ्रातरमब्रवीत् ।।

यम्युवाच ।

न भ्राता भगिनी योग्या कामयन्ती च कामयेत् ।
भ्रातृभूतेन कि तस्य स्वसुर्यो न पतिर्भवेत् ।।
अभूत इव स ज्ञेयो ननु भूत. कथचन ।
अनाथा नाथमिच्छन्ती स्वसारं यो न नाथति ।।
काङक्षन्ती भ्रातर नाथ भर्तारं यस्तु नेच्छति ।
भ्रातेति नोच्यते लोके स पुमान्मुनिसत्तमः ।।
स्याद्वान्यतनया तस्य भार्या भवति किं तया ।
इच्छतस्तु स्वसा भ्रातुः कामेन परिदह्यते ।।
यत्कार्यमहमिच्छामि त्वमेवेच्छ तदेव हि ।
अन्यथाहं मरिष्यामि त्वामिच्छन्ती विचेतना ।।

कामदुःखमसह्यं नु भ्रातः किं त्वं न चेच्छसि ।
कामाग्निना भृशं तप्ता प्रलयाम्यङ्ग मा चिरम् ।।
कामार्तायाः स्त्रियाः कान्त वशगो भव मा चिरम् ।
स्वेन कायेन मे कायं संयोजयितुमर्हसि ।।

यम उवाच ।

किमिदं लोकविद्विष्टं धर्मं भगिनि भाषसे ।
अकार्यमिह कः कुर्यात्पुमान्भद्रे सुचेतनः ।।
न ते संयोजयिष्यामि कायं कायेन भामिनि ।
न भ्राता मदनार्तायाः स्वसुः कामं प्रयच्छति ।।
महापातकमित्याहुः स्वसारं योऽधिगच्छति ।
पशूनामेष धर्मः स्यात्तिर्यग्योनिवतां शुभे ।।

यम्युवाच ।

एकस्थाने यथा पूर्वं संयोगो नौ न दुष्यति ।
मातृगर्भे तथैवायं संयोगो नौ न दुष्यति ।।
किं भ्रातरप्यनाथा त्वं [-स्त्वत्सनाथत्वं ?]
मम नेच्छसि शोभनम् ।
स्वसारं निर्ऋतिं [-ती ?] रक्षो संगच्छति च नित्यशः ।।

यम उवाच ।

स्वयंभुवाप्यनिन्द्यैतल्लोकवृत्तं [-वापि निन्द्येत
लोकवृत्तं ?] जुगुप्सितम् ।
प्रधानपुरुषाचीर्णं लोकोऽयमनुवर्तते ।।
तस्मादनिन्दितं धर्मं प्रधानपुरुषश्चरेत् ।
निन्दितं वर्जयेद्यत्नादेतद्धर्मस्य लक्षणम् ।।
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ।।
अतिपापमहं मन्ये सुभगे वचनं तव ।
विरुद्धं सर्वधर्मेषु लोकेषु च विशेषतः ।।

मत्तोऽन्यो यो भवेद्यो वै विशिष्टो रूपशीलतः।
तेन सार्धं प्रमोदस्व न ते भर्ता भवाम्यहम् ॥
नाहं स्पृशामि तन्वा ते तनुं भद्रे दृढव्रतः।
मुनयः पापमाहुस्तं यः स्वसारं निगृह्णति ॥

यम्युवाच ।

दुर्लभं चैव पश्यामि लोके रूपमिहेदृशम्।
यत्र रूपं वयश्चैव पृथिव्यां क्व प्रतिष्ठितम् ॥
न विजानामि ते चित्तं कुत एतत्प्रतिष्ठितम्।
आत्मरूपगुणोपेतां न कामयसि मोहिताम् ॥
हृदयं न विजानामि स्याद्वै केन निवेदितम्।
अन्या वा करिणा हस्तिकक्षेव तनुमध्यमा ॥
लतेव पादपे मग्ना कामं त्वच्छरणं गता।
बाहुभ्यां संपरिष्वज्य निवसामि शुचिस्मिता ॥

यम उवाच ।

अन्यं श्रयस्व सुश्रोणि देवं देव्यसितेक्षणे।
मत्तदन्तीव हस्तिन्याः परिष्वङ्गं करिष्यति ॥
यस्तु ते काममोहेन चेतसा विभ्रमं गतः।
तस्य देवस्य देवी त्वं भवेथा वरवर्णिनि ॥
ईप्सिता सर्वभूतानां वर्यां शंसन्ति मानवाः।
सुभद्रा चारुसर्वाङ्गी संस्कृता परिचक्षते ॥
तत्कृतेऽपि सुविद्वांसो न करिष्यन्ति दूषणम्।
परितापं महाप्राज्ञे न करिष्ये दृढव्रतः ॥
चित्तं मे निर्मलं भद्रे विष्णौ रुद्रे च संस्थितम्।
अतः पापं नु नेच्छामि धर्मचित्तो दृढव्रतः ॥

व्यास उवाच ।

असकृत्प्रोच्यमानोऽपि तया चैव दृढव्रतः।
कृतवान्न यमः कार्यं तेन देवत्वमाप्तवान् ॥

नराणा दृढचित्तानामेवं पापमकुर्वताम् ।
अनन्त फलमित्याहुस्तेषा स्वर्गफलं भवेत् ।।
एतत्तु यम्युपाख्यानं पूर्ववृत्तं सनातनम् ।
सर्वपापहरं पुण्यं श्रोतव्यमनसूयया ।।
यश्चैतत्पठते नित्यं हव्यकव्येषु ब्राह्मणः ।
सतृप्ताः पितरस्तस्य न विशन्ति यमालयम् ।।

# नृत्यस्योत्पत्तिः प्रशंसा च

(विष्णुधर्मोत्तर ३।३४)

वज्र उवाच।

नृत्तमुत्पादित केन ऋषिणा दैवतेन वा।
एतन्मे सशयं छिन्धि त्व हि सर्वविदुच्यसे।।

मार्कण्डेय उवाच।

एकार्णवे पुरा लोके नष्टस्थावरजङ्गमे।
शेषपर्यङ्कशयने सुप्ते मधुनिषूदने।।
सवाह्यमानचरणे लक्ष्म्या यदुकुलोद्वह।
नाभ्यां तस्य समुत्पन्नं पद्म पद्मनिभेक्षण।।
तत्र जातः स्वयं ब्रह्मा देव शुभचतुर्मुख।
देवै. सह महाभाग सशरीरैर्नराधिप।।
पद्मोदबिन्दुसभूतौ तत्रैव मधुकैटभौ।
रजस्तमोमयौ चोरौ दानवौ तौ भयानकौ।।
ततो जगृहतुर्वेदान्ब्रह्मणस्तौ नराधिप।
हृतवेदस्ततो ब्रह्मा तुष्टाव मधुसूदनम्।।
वेदा मे परमं चक्षुर्वेदा मे परम बलम्।
दानवापहृता वेदा अन्धो जातोऽस्मि शत्रुहन्।।
एवमुक्तस्तदा विष्णुर्ब्रह्मणा पुरुषोत्तम.।
उत्थाय सलिलात्तस्माद्बभ्राम सलिलाशये।।
अङ्गहारै सुललितैस्तथा पदपरिक्रमै.।
तथा भ्रमन्त त देवं ददर्शायतलोचना।।
अतीव ललित लक्ष्मीर्जातरागा विशेषत.।
देवोऽप्यश्वशिरो भूत्वा पातालतलग क्षणात्।।
स दैत्यान्दृष्टवान्वेदास्त्यक्त्वाश्वशिरसस्तनुम्।
जघान तौ महाकायौ दानवौ मधुकैटभौ।।

हत्वा वेदसहायस्तु सप्राप्तो ब्रह्मणोऽन्तिके ।
ददौ वेदांस्ततस्तस्मै देवदेवः स्वयंभुवे ।।
दत्त्वा वेदांस्ततः प्राह सृष्टिं कुरु पितामह ।
वेदग्रामयुतो ब्रह्मा सर्गं चक्रे ततः प्रभुः ।।
शेषस्याङ्कगत देव लक्ष्मी· पप्रच्छ पार्थिव ।

लक्ष्मीरुवाच ।

देवदेव जगन्नाथ शङ्खचक्रगदाधर ।।
परिक्रम मया तोये दृष्टः सललितः प्रभो ।
अतीव रमणीयाङ्ग किं तत्प्रब्रूहि मे प्रभो ।।

श्रीभगवानुवाच ।

नृत्तमुत्पादित ह्येतन्मया पद्मनिभेक्षणे ।
अङ्गहारैः सकरणै. सयुक्त सपरिक्रमैः ।।
नृत्तेनाराधयिष्यन्ति भक्तिमन्तस्तु मां शुभे ।
त्रैलोक्यस्यानुकरणं नृत्ते देवि प्रतिष्ठितम् ।।
एतावदुक्त्वा ता देवो ब्रह्माण वाक्यमब्रवीत् ।
गृहाण नृत्त धर्मज्ञ लक्ष्यलक्षणसयुतम् ।।
एतावदुक्त्वा ब्रह्माण ग्राहयामास केशव· ।
तद्गृहीत्वा ततो ब्रह्मा ददौ रुद्राय वेधसे ।।
गृहीत्वा तच्च रुद्रोऽपि तोषयामास केशवम् ।
तेन नृत्तेन सततं देवेशं भक्तवत्सलम् ।।
एवमुत्पादितं नृत्त वासुदेवेन पार्थिव ।
एकार्णवे पुरा लोके नष्टस्थावरजङ्गमे ।।
तत प्रभृति देवेशः शकर शंकरो नृणाम् ।
नृत्तेनाराधयन्नास्ते देव चक्रगदाधरम् ।।
नृत्तेश्वरत्व चावाप तुष्टाव मधुसूदनम् ।
सोऽपि तुष्यति नृत्तेन सम्यगाराधितो हरः ।।
अन्ये च देवास्तुष्यन्ति सम्यङ्नृत्तेन तोषिता. ।
आप्यायन पर ह्येतत्कथितं तु दिवौकसाम् ।।

एतदेव हि देवत्वं दीव्यतां सतत दिवि ।
पुष्पनैवेद्यदानेभ्यो नृत्तदानं विशिष्यते ।।
स्वय नृत्तेन यः कुर्याद्देवदेवस्य पूजनम् ।
विशेषेण महाभाग तस्य तुष्यति केशवः ।।
नृत्त गीत तथा वाद्यं दत्त्वा देवाय विष्णवे ।
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ।।
नृत्तेन वृत्ति यः कुर्यात्स तु वर्ज्यः प्रयत्नत ।
कुशीलवाद्यैर्यः कुर्यान्नृत्तविक्रयकारक. ।।
देवताराधन कुर्याद्यस्तु नृत्तेन धर्मवित् ।
स सर्वकामानाप्नोति मोक्षोपायं च विन्दति ।।
धन्य यशस्यमायुष्यं स्वर्गलोकप्रदं तथा ।
ईश्वराणां विलासं तु चार्तानां दु.खनाशनम् ।।
मूढानामुपदेशं ततत्स्त्रीणा सौभाग्यवर्धनम् ।
शान्तिक पौष्टिकं काम्यं वासुदेवेन निर्मितम् ।।
एतावदुक्तं तव नृत्तशास्त्रं
समासतो लोकहिताय राजन् ।
नृत्तेन यत्न· पुरुषेण कार्यो
लोकद्वय जेतुमभीप्सता वै ।।

# जनकशुकसंवादे गृहस्थधर्मप्रशंसा

(देवीभागवतपु० १।१५–१९)

व्यास उवाच।

पठ पुत्र महाभाग मया भागवत कृतम्।
शुभं न चातिविस्तीर्णं पुराणं ब्रह्मसमितम्।।
स्कन्धा द्वादश तत्रैव पञ्चलक्षणसंयुतम्।
सर्वेषा च पुराणाना भूषणं मम समतम्।।
सदसज्ज्ञानविज्ञान श्रुतमात्रेण जायते।
येन भागवतेनेह तत्पठ त्वं महामते।।

सूत उवाच।

शुकोऽधीत्य पुराण तु स्थितो व्यासाश्रमे शुभे।
न लेभे शर्म कर्मात्मा ब्रह्मात्मज इवापरः।।
एकान्तसेवी विकल. स शून्य इव लक्ष्यते।
नात्यन्तभोजनासक्तो नोपवासरतस्तथा।।
चिन्ताविष्टं शुक दृष्ट्वा व्यासः प्राह सुत प्रति।
किं पुत्र चिन्त्यते नित्यं कस्माद्व्यग्रोऽसि मानद।।
आस्से ध्यानपरो नित्यमृणग्रस्त इवाधनः।
का चिन्ता वर्तते पुत्र मयि ताते तु तिष्ठति।।
सुखं भुङ्क्ष्व यथाकामं मुञ्च शोक मनोगतम्।
ज्ञान चिन्तय शास्त्रोक्त विज्ञाने च मतिं कुरु।।
न चेन्मनसि ते शान्तिर्वचसा मम सुव्रत।
गच्छ त्वं मिथिला पुत्र पालितां जनकेन ह।।
स ते मोहं महाभाग नाशयिष्यति भूपति.।
जनको नाम धर्मात्मा विदेहः सत्यसागरः।।
त गत्वा नृपतिं पुत्र सदेह स्व निवर्तय।
वर्णाश्रमाणां धर्मांस्त्वं पृच्छ पुत्र यथातथम्।।

जीवन्मुक्त. स राजर्षिर्ब्रह्मज्ञानमतिः शुचिः ।
तथ्यवक्तातिशान्तश्च योगी योगप्रियः सदा ।।
तच्छ्रुत्वा वचन तस्य व्यासस्यामिततेजसः ।
प्रत्युवाच महातेजाः शुकश्चारणिसभवः ।।
दम्भोऽय किल धर्मात्मन्भाति चित्ते ममाधुना ।
जीवन्मुक्तो विदेहश्च राज्यं शास्ति मुदान्वितः ।।
वन्ध्यापुत्र इवाभाति राजासौ जनकः पितः ।
कुर्वन् राज्य विदेह कि संदेहोऽयं ममाद्भुत ।।
द्रष्टुमिच्छाम्यह भूप विदेह नृपसत्तमम् ।
कथ तिष्ठति ससारे पद्मपत्रमिवाम्भसि ।।
सदेहोऽय महास्तात विदेहे परिवर्तते ।
मोक्षः किं वदता श्रेष्ठ सौगतानामिवापर. ।।
कथ भुक्तमभुक्तं स्यादकृत च कृत कथम् ।
व्यवहार' कथ त्याज्य इन्द्रियाणा महामते ।।
माता पुत्रस्तथा भार्या भगिनी कुलटा तथा ।
भेदाभेद. कथ न स्याद्यद्येतन्मुक्तता कथम् ।।
कटु क्षार तथा तीक्ष्णं कषायं मिष्टमेव च ।
रसना यदि जानाति भुङ्क्ते भोगाननुत्तमान् ।।
शीतोष्णसुखदु खादिपरिज्ञान यदा भवेत् ।
मुक्तता कीदृशी तात सदेहोऽयं ममाद्भुत ।।
शत्रुमित्रपरिज्ञान वैर प्रीतिकरं सदा ।
व्यवहारे परे तिष्ठन्कथ न कुरुते नृपः ।।
चौर वा तापस वापि समान मन्यते कथम् ।
असमा यदि बुद्धि. स्यान्मुक्तता तर्हि कीदृशी ।।
दृष्टपूर्वो न मे कश्चिज्जीवन्मुक्तश्च भूपति. ।
शङ्केय महती तात गृहे मुक्त कथं नृपः ।।
दिदृक्षा महती जाता श्रुत्वा तं भूपतिं तथा ।
सदेहविनिवृत्त्यर्थं गच्छामि मिथिला प्रति ।।
इत्युक्त्वा पितरं पुत्र पादयोः पतितः शुक. ।
बद्धाञ्जलिरुवाचेद गन्तुकामो महामनाः ।।

आपृच्छे त्वा महाभाग ग्राह्य ते वचन मया ।
विदेहान्द्रष्टुमिच्छामि पालिताञ्जनकेन तु ।।
विना दण्ड कथ राज्यं करोति जनकः किल ।
धर्मे न वर्तते लोको दण्डश्चेन्न भवेद्यदि ।।
धर्मस्य कारणं दण्डो मन्वादिप्रहित. सदा ।
स कथं वर्तते तात सशयोऽय महान्मम ।।
मम माता त्विय वन्ध्या तद्वद्भाति विचेष्टितम् ।
पृच्छामि त्वा महाभाग गच्छामि च परतप ।।
त दृष्ट्वा गन्तुकामं च शुक सत्यवतीसुत. ।
आलिङ्ग्योवाच पुत्र त ज्ञानिन निःस्पृह दृढम् ।।

व्यास उवाच ।

स्वस्त्यस्तु शुक दीर्घायुर्भव पुत्र महामते ।
सत्या वाच प्रदत्त्वा मे गच्छ तात यथासुखम् ।।
आगन्तव्य पुनर्गत्वा ममाश्रममनुत्तमम् ।
न कुत्रापि च गन्तव्यं त्वया पुत्र कथचन ।।
सुख जीवामि पुत्राह दृष्ट्वा ते मुखपङ्कजम् ।
अपश्यन्दु खमाप्नोमि प्राणस्त्वमसि मे सुत ।।
दृष्ट्वा त्वं जनक पुत्र संदेह विनिवर्त्य च ।
अत्रागत्य सुख तिष्ठ वेदाध्ययनतत्परः ।।

सूत उवाच ।

इत्युक्तः सोऽभिवाद्यार्यं कृत्वा चैव प्रदक्षिणम् ।
चलितस्तरसातीव धनुर्मुक्तः शरो यथा ।।
संपश्यन्विविधान्देशाँल्लोकांश्च वित्तधर्मिणः ।
वनानि पादपाश्चैव क्षेत्राणि फलितानि च ।।
तापसांस्तप्यमानांश्च याजकान्दीक्षयान्वितान् ।
योगाभ्यासरतान्योगिवानप्रस्थान्वनौकसः ।।
शैवान्पाशुपतांश्चैव सौराञ्छाक्तांश्च वैष्णवान् ।
वीक्ष्य नानाविधान्धर्माञ्जगामातिस्मयन्मुनिः ।।

वर्षद्वयेन मेरुं च समुल्लङ्घ्य महामतिः ।
हिमाचलं च वर्षेण जगाम मिथिलां प्रति ॥
प्रविष्टो मिथिला मध्ये पश्यन्सर्वर्द्धिमुत्तमाम् ।
प्रजाश्च सुखिताः सर्वा. सदाचारा. सुसंस्थिताः ॥
क्षत्रा निवारितस्तत्र कस्त्वमत्र समागतः ।
किं ते कार्यं वदस्वेति पृष्टस्तेन न चाब्रवीत् ॥
निःसृत्य नगरद्वारात्स्थित· स्थाणुरिवाचलः ।
विस्मितोऽतिहसस्तस्थौ वचो नोवाच किंचन ॥

प्रतीहार उवाच ।

ब्रूहि मूकोऽसि किं ब्रह्मन्किमर्थं त्वमिहागत. ।
चलनं च विना कार्यं न भवेदिति मे मतिः ॥
राजाज्ञया प्रवेष्टव्यं नगरेऽस्मिन्सदा द्विज ।
अज्ञातकुलशीलस्य प्रवेशो नात्र सर्वथा ॥
तेजस्वी भासि नूनं त्वं ब्राह्मणो वेदवित्तम· ।
कुलं कार्यं च मे ब्रूहि यथेष्टं गच्छ मानद ॥

शुक उवाच ।

यदर्थमागतोऽस्म्यत्र तत्प्राप्तं वचनात्तव ।
विदेहनगरं द्रष्टुं प्रवेशो यत्र दुर्लभः ॥
मोहोऽयं मम दुर्बुद्धेः समुल्लङ्घ्य गिरिद्वयम् ।
राजानं द्रष्टुकामोऽहं पर्यटन्समुपागतः ॥
वञ्चितोऽहं स्वयं पित्रा दूषणं कस्य दीयते ।
भ्रामितोऽहं महाभाग कर्मणा वा महीतले ॥
धनाशा पुरुषस्येह परिभ्रमणकारणम् ।
सा मे नास्ति तथाप्यत्र सम्प्राप्तोऽस्मि भ्रमात्किल ॥
निराशस्य सुखं नित्यं यदि मोहे न मज्जति ।
निराशोऽहं महाभाग मग्नोऽस्मिन्मोहसागरे ॥
क्व मेरुर्मिथिला क्वेयं पद्भ्या च समुपागत ।
परिभ्रमफलं किं मे वञ्चितो विधिना किल ॥

प्रारब्ध किल भोक्तव्यं शुभं वाप्यथवाशुभम् ।
उद्यमस्तद्वशे नित्यं कारयत्येव सर्वथा ।।
न तीर्थं न च वेदोऽत्र यदर्थमिह मे श्रम. ।
अप्रवेशः पुरे जातो विदेहो नाम भूपतिः ।।
इत्युक्त्वा विररामाशु मौनीभूत इव स्थितः ।
ज्ञातो हि प्रतिहारेण ज्ञानी कश्चिद्द्विजोत्तम. ।।
सामपूर्वमुवाचासौ तं क्षत्ता संस्थित मुनिम् ।
गच्छ भो यत्र ते कार्यं यथेष्ट द्विजसत्तम ।।
अपराधो मम ब्रह्मन्यन्निवारितवानहम् ।
तत्क्षन्तव्यं महाभाग विमुक्ताना क्षमा बलम् ।।

शुक उवाच ।

किं तेऽत्र दूषणं क्षत्तः परतन्त्रोऽसि सर्वदा ।
प्रभुकार्यं प्रकर्तव्य सेवकेन यथोचितम् ।।
न भूपदूषण चात्र यदहं रक्षितस्त्वया ।
चौरशत्रुपरिज्ञानं कर्तव्यं सर्वथा बुधै' ।।
ममैव सर्वथा दोषो यदह समुपागतः ।
गमन परगेहे यल्लघुतायाश्च कारणम् ।।

प्रतीहार उवाच ।

किं सुखं द्विज किं दुःख किं कार्यं शुभमिच्छता ।
कः शत्रुर्हितकर्ता को ब्रूहि सर्वं ममाद्य वै ।।

शुक उवाच ।

द्वैविध्य सर्वलोकेषु सर्वत्र द्विविधो जनः ।
रागी चैव विरागी च तयोश्चित्तं द्विधा पुन. ।।
विरागी त्रिविधः काम ज्ञातोऽज्ञातश्च मध्यम. ।
रागी च द्विविधः प्रोक्तो मूर्खश्च चतुरस्तथा ।।
चातुर्यं द्विविध प्रोक्त शास्त्रज मतिज तथा ।
मतिस्तु द्विविधा लोके युक्तायुक्तेति सर्वथा ।।

प्रतीहार उवाच ।

यदुक्त भवता विद्वन्नार्थज्ञोऽह द्विजोत्तम ।
तत्सर्वं विस्तरेणाद्य यथार्थं वद सत्तम ।।

शुक उवाच ।

रागो यस्यास्ति ससारे स रागीत्युच्यते ध्रुवम् ।
दु ख बहुविध तस्य सुख च विविध पुन. ।।
धन प्राप्य सुतान्दारान्मानं च विजयं तथा ।
तदप्राप्य महद्दु ख भवत्येव क्षणे क्षणे ।।
कार्यं तस्य सुखोपाय· कर्तव्यं सुखसाधनम् ।
तस्याराति· स विज्ञेय सुखविघ्न करोति य· ।।
सुखोत्पादयिता मित्रं रागयुक्तस्य सर्वदा ।
चतुरो नैव मुह्येत मूर्ख सर्वत्र मुह्यति ।।
विरक्तस्यात्मरक्तस्य सुखमेकान्तसेवनम् ।
आत्मानुचिन्तन चैव वेदान्तस्य च चिन्तनम् ।।
दु ख तदेतत्सर्वं हि ससारकथनादिकम् ।
शत्रवो बहवस्तस्य विज्ञस्य शुभमिच्छत· ।।
काम क्रोध प्रमादश्च शत्रवो विविधाः स्मृता· ।
वन्धु. सन्तोष एवास्य नान्योऽस्ति भुवनत्रये ।।

सूत उवाच ।

तच्छ्रुत्वा वचन तस्य मत्वा त ज्ञानिन द्विजम् ।
क्षत्ता प्रवेशयामास कक्षा चातिमरमनोाम् ।।
नगर वीक्षमाण सस्त्रैविध्यजनसकुलम् ।
नानाविपणिद्रव्याढ्य क्रयविक्रयकारकम् ।।
रागद्वेषयुत काममलोभमोहाकुल तथा ।
विवदत्सु जनाकीर्णं वसुपूर्णं महत्तरम् ।।
पश्यन्स त्रिविधाँल्लोकान्प्रासरद्राजमन्दिरम् ।
प्राप्तः परमतेजस्वी द्वितीय इव भास्करः ।।

निवारितश्च तत्रैव प्रतिहारेण काष्ठवत् ।
तत्रैव च स्थितो द्वारि मोक्षमेवानुचिन्तयन् ।।
छायायामातपे चैव समदर्शी महातपाः ।
ध्यान कृत्वा तथैकान्ते स्थितः स्थाणुरिवाचल. ।।
त मुहूर्तादुपागत्य राज्ञोऽमात्य. कृताञ्जलिः ।
प्रावेशयत्ततः कक्षा द्वितीयां राजवेश्मनः ।।
तत्र दिव्य मनोरम्य पुष्पितं दिव्यपादपम् ।
तद्वनं दर्शयित्वा तु कृत्वा चातिथिसत्क्रियाम् ।।
वारमुख्या. स्त्रियस्तत्र राजसेवापरायणाः ।
गीतवादित्रकुशलाः कामशास्त्रविशारदाः ।।
ता आदिश्य च सेवार्थं शुकस्य मन्त्रिसत्तमः ।
निर्गत. सदनात्तस्माद्व्यासपुत्रः स्थित. सदा ।।
पूजितः परया भक्त्या ताभिः स्त्रीभिर्यथाविधि ।
देशकालोपपन्नेन नानान्नेनातितोषितः ।।
ततोऽन्त.पुरवासिन्यस्तस्यान्त·पुरकाननम् ।
रम्य सदर्शयामासुरङ्गना. काममोहिता ।।
स युवा रूपवान्कान्तो मृदुभाषी मनोरम. ।
दृष्ट्वा ता मुमुहुः सर्वास्तं च काममिवापरम् ।।
जितेन्द्रियमुनि मत्वा सर्वा. पर्यचरंस्तदा ।
आरणेयस्तु शुद्धात्मा मातृभावमकल्पयत् ।।
आत्मारामो जितक्रोधो न हृष्यति न तप्यति ।
पश्यस्तासा विकारांश्च स्वस्थ एव स तस्थिवान् ।।
तस्मै शय्या सुरम्या च ददुर्नार्य. सुसस्कृताम् ।
परार्घ्यास्तरणोपेता नानोपस्करसंवृताम् ।।
स कृत्वा पादशौचं च कुशपाणिरतन्द्रितः ।
उपास्य पश्चिमां सध्या ध्यानमेवान्वपद्यत ।।
याममेक स्थितो ध्याने सुष्वाप तदनन्तरम् ।
सुप्त्वा यामद्वय तत्र चोदतिष्ठत्तत. शुक· ।।
पाश्चात्यं यामिनीयामं ध्यानमेवान्वपद्यत ।
स्नात्वा प्रात.क्रियाः कृत्वा पुनरास्ते समाहित· ।।

श्रुत्वा तमागत राजा मन्त्रिभिः सहितः शुचि ।
पुरः पुरोहित कृत्वा गुरुपुत्रं समभ्ययात् ॥
कृत्वार्हणा नृपः सम्यग्दत्त्वासनमनुत्तमम् ।
पप्रच्छ कुशलं गा च विनिवेद्य पयस्विनीम् ॥
स च ता नृपपूजा वै प्रत्यगृह्णाद्यथाविधि ।
पप्रच्छ कुशल राज्ञे स्व निवेद्य निरामयम् ॥
कृत्वा कुशलसप्रश्नमुपविष्ट सुखासने ।
शुकं व्याससुत शान्तं पर्यपृच्छत पार्थिव ॥
किंनिमित्तं महाभाग निःस्पृहस्य च मा प्रति ॥
जात ह्यागमनं ब्रूहि कार्यं तन्मुनिसत्तम ॥

शुक उवाच ।

व्यासेनोक्तो महाराज कुरु दारपरिग्रहम् ।
सर्वेषामाश्रमाणां च गृहस्थाश्रम उत्तम ॥
मया नाङ्गीकृत वाक्यं मत्वा बन्धं गुरोरपि ।
न बन्धोऽस्तीति तेनोक्तो नाहं तत्कृतवान्पुनः ॥
इति सदिग्धमनसं मत्वा स मुनिसत्तमः ।
उवाच वचनं तथ्यं मिथिला गच्छ मा शुचः ॥
याज्योऽस्ति जनकस्तत्र जीवन्मुक्तो नराधिपः ।
विदेहो लोकविदितः पाति राज्यमकण्टकम् ॥
कुर्वन् राज्य तथा राजा मायापाशैर्न बध्यते ।
त्व बिभेषि कथ पुत्र वनवृत्तिः परंतप ॥
पश्य तं नृपशार्दूल त्यज मोहं मनोगतम् ।
कुरु दारान्महाभाग पृच्छ वा भूपतिं च तम् ॥
सदेह ते मनोजात कथयिष्यति पार्थिवः ।
तच्छ्रुत्वा वचन तस्य मामेहि तरसा सुत ॥
सम्प्रोक्तोऽह महाराज तत्पुरे च तदाज्ञया ।
मोक्षकामोऽस्मि राजेन्द्र ब्रूहि कृत्यं ममानघ ॥
तपस्तीर्थव्रतेज्याश्च स्वाध्यायस्तीर्थसेवनम् ।
ज्ञान वा वद राजेन्द्र मोक्ष प्रति च कारणम् ॥

जनक उवाच ।

शृणु विप्रेण कर्तव्यं मोक्षमार्गाश्रितेन यत् ।
उपनीतो वसेदादौ वेदाभ्यासाय वै गुरौ ।।
अधीत्य वेदवेदान्तान्दत्त्वा च गुरुदक्षिणाम् ।
समावृत्तस्तु गार्हस्थ्ये सदारो निवसेन्मुनि. ।।
न्यायवृत्तिस्तु सन्तोषी निराशी गतकल्मष. ।
अग्निहोत्रादिकर्माणि कुर्वाणः सत्यवाक्शुचिः ।।
पुत्र पौत्रं समासाद्य वानप्रस्थाश्रमे वसेत् ।
तपसा षड्रिपूञ्जित्वा भार्यां पुत्रे निवेश्य च ।।
सर्वानिग्नीन्यथान्यायमात्मन्यारोप्य धर्मवित् ।
वसेत्तुर्याश्रमे श्रान्त. शुद्धे वैराग्यसभवे ।।
विरक्तस्याधिकारोऽस्ति सन्यासे नान्यथा क्वचित् ।
वेदवाक्यमिद तथ्य नान्यथेति मतिर्मम ।।
शुकाष्टचत्वारिशद्वै सस्कारा वेदबोधिता· ।
चत्वारिशद्गृहस्थस्य प्रोक्तास्तत्र महात्मभिः ।।
अष्टौ च मुक्तिकामस्य प्रोक्ताः शमदमादयः ।
आश्रमादाश्रम गच्छेदिति शिष्टानुशासनम् ।।

शुक उवाच ।

उत्पन्ने हृदि वैराग्ये ज्ञानविज्ञानसंभवे ।
अवश्यमेव वस्तव्यमाश्रमेषु वनेषु वा ।।

जनक उवाच ।

इन्द्रियाणि बलिष्टानि न नियुक्तानि मानद ।
अपक्वस्य प्रकुर्वन्ति विकारास्ताननेकशः ।।
भोजनेच्छा सुखेच्छा च शय्येच्छामात्मजस्य च ।
यती भूत्वा कथ कुर्याद्विकारे समुपस्थिते ।।
दुर्जर वासनाजाल न शान्तिमुपयाति वै ।
अतस्तच्छमनार्थाय क्रमेण च परित्यजेत् ।।

ऊर्ध्वं सुप्तः पतत्येव न शयानः पतत्यधः ।
परिव्रज्य परिभ्रष्टो न मार्गं लभते पुनः ।।
यथा पिपीलिका मूलाच्छाखायामधिरोहति ।
शनैः शनैः फलं याति सुखेन पदगामिनी ।।
विहगस्तरसा याति विघ्नशङ्कामुदस्य वै ।
श्रान्तो भवति विश्रम्य सुखं याति पिपीलिका ।।
मनस्तु प्रबलं काममजेयमकृतात्मभिः ।
अतः क्रमेण जेतव्यमाश्रमानुक्रमेण च ।।
गृहस्थाश्रमसंस्थोऽपि शान्तः सुमतिरात्मवान् ।
न च हृष्येन्न च तपेल्लाभालाभे समो भवेत् ।।
विहितं कर्म कुर्वाणस्त्यजंश्चिन्तान्वित च यत् ।
आत्मलाभेन संतुष्टो मुच्यते नात्र संशयः ।।
पश्याहं राज्यसंस्थोऽपि जीवन्मुक्तो यथानघ ।
विचरामि यथाकामं न मे किंचित्प्रजायते ।।
भुञ्जानो विविधान्भोगान्कुर्वन्कार्याण्यनेकशः ।
भविष्यामि यथाहं त्वं तथा मुक्तो भवानघ ।।
कथ्यते खलु यद्दृश्यमदृश्य बध्यते कुतः ।
दृश्यानि पञ्चभूतानि गुणास्तेषां तथा पुनः ।।
आत्मा गम्योऽनुमानेन प्रत्यक्षो न कदाचन ।
स कथं बध्यते ब्रह्मन्निर्विकारो निरञ्जनः ।।
मनस्तु सुखदुःखानां महतां कारणं द्विज ।
जाते तु निर्मले ह्यस्मिन्सर्वं भवति निर्मलम् ।।
भ्रमन्सर्वेषु तीर्थेषु स्नात्वा स्नात्वा पुनः पुनः ।
निर्मलं न मनो यावत्तावत्सर्वं निरर्थकम् ।।
न देहो न च जीवात्मा नेन्द्रियाणि परंतप ।
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।।
शुद्धो मुक्तः सदैवात्मा न वै बध्येत कर्हिचित् ।।
बन्धमोक्षौ मनःसंस्थौ तस्मिञ्छान्ते प्रशाम्यति ।।
शत्रुर्मित्रमुदासीनो भेदाः सर्वे मनोगताः ।
एकात्मत्वे कथं भेदः संभवेद् द्वैतदर्शनात् ।।

जीवो ब्रह्म सदैवाह नात्र कार्या विचारणा।
भेदबुद्धिस्तु ससारे वर्तमाना प्रवर्तते ॥
अविद्येयं महाभाग विद्या चैतन्निवर्तनम्।
विद्याविद्ये च विज्ञेये सर्वदैव विचक्षणैः॥
विनातपं हि छायाया ज्ञायते च कथ सुखम्।
अविद्यया विना तद्वत्कथं विद्यां च वेत्ति वै ॥
गुणा गुणेषु वर्तन्ते भूतानि च तथैव च।
इन्द्रियाणीन्द्रियार्थेषु को दोषस्तत्र चात्मनः॥
मर्यादा सर्वरक्षार्थं कृता वेदेपु सर्वश ।
अन्यथा धर्मनाशः स्यात्सौगतानामिवानघ ॥
धर्मनाशे विनष्ट. स्याद्वर्णाचारोऽतिवर्तितः।
अतो वेदप्रदिष्टेन मार्गेण गच्छता शुभम् ॥

शुक उवाच।

संदेहो वर्तते राजन्न निवर्तति मे क्वचित्।
भवता कथित यत्तच्छृण्वतो मे नराधिप ॥
वेदधर्मेषु हिसा स्यादधर्मबहुला हि सा।
कथं मुक्तिप्रदो धर्मो वेदोक्तो बत भूपते ॥
प्रत्यक्षेण त्वनाचारः सोमपानं नराधिप।
पशूना हिसनं तद्वद्भक्षणं त्वामिषस्य च ॥
सौत्रामणौ तथा प्रोक्त. प्रत्यक्षेण सुराग्रहः।
द्यूतक्रीडा तथा प्रोक्ता व्रतानि विविधानि च ॥
श्रूयते स्म पुरा ह्यासी छशबिन्दुर्नृपोत्तमः।
यज्वा धर्मपरो नित्यं वदान्यः सत्यसागरः॥
गोप्ता च धमसेतूनां शास्ता चोत्पथगामिनाम्।
यज्ञाश्च विहितास्तेन बहवो भूरिदक्षिणाः॥
चर्मणां पर्वतो जातो विन्ध्याचलसम. पुन.।
मेघाम्बुप्लावनाज्जाता नदी चर्मण्वती शुभा॥
सोऽपि राजा दिवं यातः कीर्तिरस्याचला भुवि।
एवं धर्मेषु वेदेषु न मे बुद्धि. प्रवर्तते ॥

स्त्रीसङ्गेन सदा भोगे सुखमाप्नोति मानव· ।
अलाभे दु·खमत्यन्त जीवन्मुक्त· कथ भवेत् ।।

जनक उवाच ।

हिंसा यज्ञेषु प्रत्यक्षा साहिंसा परिकीर्तिता ।
उपाधियोगतो हिंसा नान्यथेति विनिर्णय. ।।
यथा चेन्धनसयोगादग्नौ धूम प्रवर्तते ।
तद्वियोगात्तथा तस्मिन्निर्धूमत्व विभाति वै ।।
अहिंसा च तथा विद्धि वेदोक्ता मुनिसत्तम ।
रागिणा सापि हिंसैव निस्पृहाणा न सा मता ।।
अरागेण च यत्कर्म तथाहकारवर्जितम् ।
अकृत वेदविद्वास प्रवदन्ति मनीषिण ।।
गृहस्थाना तु हिंसैव या यज्ञे द्विजसत्तम ।
अरागेण च यत्कर्म तथाहकारवर्जितम् ।
साहिंसैव महाभाग मुमुक्षूणा जितात्मनाम् ।।

शुक उवाच ।

सदेहोऽय महाराज वर्तते हृदये मम ।
मायामध्ये वर्तमान स कथ निस्पृहो भवेत् ।।
शास्त्रज्ञानं च सप्राप्य नित्यानित्यविचारणम् ।
त्यजते न मनो मोह स कथ मुच्यते नर. ।।
अन्तर्गत तमश्छेत्तु शास्त्राद्बोधो हि न क्षमः ।
यथा न नश्यति तम कृतया दीपवार्त्तया ।।
अद्रोह. सर्वभूतेषु कर्तव्य. सर्वदा बुधै ।
स कथ राजशार्दूल गृहस्थस्य भवेत्तथा ।।
वित्तैषणा न ते शान्ता तथा राजसुखैषणा ।
जयैषणा च सग्रामे जीवन्मुक्त. कथ भवे ।।
चोरेषु चौरबुद्धिस्ते साधुबुद्धिस्तु तापसे ।
स्वपरत्व तवाप्यस्ति विदेहस्त्व कथ नृप ।।
कटतीक्षणकषायाम्लरसान्वेत्सि शुभाशुभान् ।

शुभेषु रमते चित्तं नाशुभेषु तथा नृप ।।
जाग्रत्स्वप्नसुषुप्तिश्च तव राजन्भवन्ति हि ।
अवस्थास्तु यथाकालं तुरीया तु कथ नृप ।।
पदात्यश्वरथेभाश्च सर्वे वै वशगा मम ।
स्वाम्यहं चैव सर्वेषा मन्यसे त्व न मन्यसे ।।
मिष्टमत्सि सदा राजन्मुदितो विमनास्तथा ।
मालाया च तथा सर्पे समदृक्त्व नृपोत्तम ।।
विमुक्तस्तु भवेद्राजन्समलोष्टाश्मकाञ्चन· ।
एकात्मबुद्धि सर्वत्र हितकृत्सर्वजन्तुषु ।।
न मेऽद्य रमते चित्तं गृहदारादिषु क्वचित् ।
एकाकी निस्पृहोऽत्यर्थं चरेयमिति मे मति. ।।
नि.सङ्गो निर्ममः शान्त. पत्रमूलफलाशनः ।
मृगवद्विचरिष्यामि निर्द्वन्द्वो निष्परिग्रहः ।।
किं मे गृहेण वित्तेन भार्यया च सुरूपया ।
विरागमनस. काम गुणातीतस्य पार्थिव ।।
चिन्त्यसे विविधाकार नानारागसमाकुलम् ।
दम्भोऽय किल ते भाति विमुक्तोऽस्मीति भाषसे ।।
कदाचिच्छत्रुजा चिन्ता धनजा च कदाचन ।
कदाचित्सैन्यजा चिन्ता निश्चिन्तोऽसि कदा नृप ।।
वैखानसा ये मुनयो मिताहारा जितव्रताः ।
तेऽपि मुह्यन्ति ससारे जानन्तोऽपि ह्यसत्यताम् ।।
तव वंशसमुत्थानां विदेहा इति भूपते ।
कुटिलं नाम जानीहि नान्यथेति कदाचन ।।
विद्याधरो यथा मूर्खो जन्मान्धस्तु दिवाकरः ।
लक्ष्मीधरो दरिद्रश्च नाम तेषां निरर्थकम् ।।
तव वंशोद्भवा ये ये श्रुताः पूर्वे मया नृपाः ।
विदेहा इति विख्याता नामतः कर्मतो न ते ।।
निमिनामाभवद्राजा पूर्वं तव कुले नृप ।
यज्ञार्थं स तु राजर्षिर्वसिष्ठ स्वगुरुं मुनिम् ।।
निमन्त्रयामास तदा तमुवाच नृप मुनि. ।

निमन्त्रितोऽस्मि यज्ञार्थं देवेन्द्रेणाधुना किल ।।
कृत्वा तस्य मख पूर्णं करिष्यामि तवापि वै ।
तावत्कुरुष्व राजेन्द्र संभार तु शनैः शनैः ।।
इत्युक्त्वा निर्ययौ सोऽथ महेन्द्रयजने मुनि· ।
निमिरन्य गुरुं कृत्वा चकार मखमुत्तमम् ।।
तच्छ्रुत्वा कुपितोऽत्यर्थं वसिष्ठो नृपति पुनः ।
शशाप च पतत्वद्य देहस्ते गुरुलोपक ।।
राजापि त शशापाथ तवापि च पतत्वयम् ।
अन्योन्यशापात्पतितौ तावेव च मया श्रुतम् ।।
विदेहेन च राजेन्द्र कथ शप्तो गुरु. स्वयम् ।
विनोद इव मे चित्ते विभाति नृपसत्तम ।।

जनक उवाच ।

सत्यमुक्तं त्वया नात्र मिथ्या किंचिदिद मतम् ।
तथापि शृणु विप्रेन्द्र गुरुर्मम सुपूजितः ।।
पितु सङ्ग परित्यज्य त्व वनं गन्तुमिच्छसि ।
मृगै. सह सुसंबन्धो भविता ते न सशयः ।।
महाभूतानि सर्वत्र नि.सङ्गः क्व भविष्यसि ।
आहारार्थं सदा चिन्ता निश्चिन्त. स्याः कथ मुने ।।
दण्डाजिनकृता चिन्ता यथा तव वनेऽपि च ।
तथैव राज्यचिन्ता मे चिन्तयानस्य वा न वा ।।
विकल्पोपहतस्त्वं वै दूरदेशमुपागतः ।
न मे विकल्पसंदेहो निर्विकल्पोऽस्मि सर्वथा ।।
सुखं स्वपिमि विप्राहं सुख भुञ्जामि सर्वदा ।
न बद्धोऽस्मीति बुद्ध्याहं सर्वदैव सुखी मुने ।।
त्व तु दु खी सदैवासि बद्धोऽहमिति शकया ।
इति शका परित्यज्य सुखी भव समाहित . ।।
देहोऽय मम बन्धोऽय न ममेति च मुक्तता ।
तथा धन गृहं राज्य न ममेति च निश्चय. ।।

सूत उवाच ।

तच्छ्रुत्वा वचन तस्य शुकः प्रीतमनाभवत् ।
आपृच्छ्य तं जगामाशु व्यासस्याश्रममुत्तमम् ।।
आगच्छन्त सुतं दृष्ट्वा व्यासोऽपि सुखमाप्तवान् ।
आलिङ्ग्याघ्राय मूर्धानं पप्रच्छ कुशलं पुनः ।।
स्थितस्तत्राश्रमे रम्ये पितु. पार्श्वे समाहितः ।
वेदाध्ययनसंपन्नः सर्वशास्त्रविशारदः ।।
जनकस्य दशा दृष्ट्वा राज्यस्थस्य महात्मनः ।
स निर्वृतिं परां प्राप्य पितुराश्रमसंस्थित. ।।
पितृणां सुभगा कन्या पीवरी नाम सुन्दरी ।
शुकश्चकार पत्नी तां योगमार्गस्थितोऽपि हि ।।

# नरकासुरजन्म

(कालिकापु० ३७)

मार्कण्डेय उवाच ।

अथ काले बहुतिथे व्यतीते द्विजसत्तमा ।
विदेहविषये राजा जनको नाम वीर्यवान् ॥
सर्वराजगुणैर्युक्तो राजनीतिविवर्धित. ।
सत्यवाक्शीलवान्दक्षो ब्रह्मण्य' प्रयत. शुचि ॥
देवद्विजगुरूणां च पूजासु निरतः सदा ।
बभूव सर्वलोकाना पितेव परिपालक ॥
तस्य राज्ञ. सुतो नाभूत्प्राप्ते कालेऽपि वै यदा ।
तदा स विमना भूत्वा चिन्ताध्यानपरोऽभवत् ॥
एकदा सोऽथ शुश्राव नारदस्य मुखान्नृप. ।
अपुत्रो नृपतिर्वृद्धो नाम्ना दशरथो महान् ।
पुत्राँल्लेभे महासत्त्वानध्वरेण महामति. ॥
अयोध्याया नगर्यां तु ऋष्यशृङ्गपुरोगमैः ।
मुनिभिर्विहितैर्यज्ञैर्लब्धवान्स नृप. सुतान् ॥
राम च भरत चैव शत्रुघ्न लक्ष्मण तथा ।
महासत्त्वान्महावीरान्देवगर्भोपमाञ्छुभान् ॥
तच्छ्रुत्वा जनको राजा प्रविश्यान्त.पुर स्वकम् ।
भार्याभिर्मन्त्रयामास यज्ञार्थं पुत्रजन्मने ॥
मन्त्रयित्वा तदा राजा महिषीप्रमुखैः स्वयम् ।
चतसृभिस्तु भार्याभिर्यज्ञार्थं दीक्षितोऽभवत् ॥
तत पुरोधस राजा गौतम मुनिसत्तमम् ।
तत्पुत्र च शतानन्दं पुरोधायाकरोन्मखम् ॥
द्वौ पुत्रौ तस्य संजातौ यज्ञभूमौ मनोहरौ ।
एका च दुहिता साध्वी भूम्यन्तरगता शुभा ॥
नारदस्योपदेशेन यज्ञभूमिं ततो नृप. ।

हलेन दारयामास यज्ञवाटावधि स्वयम् ॥
तद्भूमिजातसीतायां शुभां कन्या समुत्थिताम् ।
लेभे राजा मुदा युक्तः सर्वलक्षणसयुताम् ॥
तस्या तु जातमात्रायां पृथिव्यन्तर्हिता स्वयम् ।
जगाद वचन चेद गौतमं नारद नृपम् ॥

पृथिव्युवाच ।

एषा सुता मया दत्ता तव राजन्मनोहरा ।
एना गृहाण सुभगा कुलद्वयशुभावहाम् ॥
अनया मे महाभारस्तत्त्वतो हेतुभूतया ।
क्षय यास्यति भारार्तिं मोचयिष्यामि दारुणाम् ॥
रावणाद्या महावीराः कुम्भकर्णादयोऽपरे ।
नाशं यास्यन्नि दुर्धर्षाः कृतेऽस्या राक्षसा. परे ॥
त्व च मोद दुराधर्षं दुहितृकृतिजं नृप ।
अवाप्स्यसि सुराणा च पितृणामृणशोधनम् ॥
कित्वेकः समयः कार्यस्त्वया मम नरोत्तम ।
तमह ते प्रवक्ष्यामि पुरो नारदगौतमे ॥
निहते रावणे वीरे भारार्तिरहिता सुखम् ।
सुपुत्रं जनयिष्यामि यज्ञभूमावहं तव ॥
त पुत्रवत्पालयिता भवान्नृपतिसत्तम ।
यावद्व्यतीतबाल्यः सन्भविता तनयो मम ॥
व्यतीतबाल्यं तमह पालयिष्ये स्वयं नृप ।
तस्य स्यान्मानुषो भावो यथा त्वं तत्करिष्यसि ॥

मार्कण्डेय उवाच ।

इति पृथिव्या वचनं श्रुत्वा राजा तदा मुदा ।
प्रणम्य पृथिवी प्राह साम्ना स जनकाह्वयः ॥

राजोवाच ।

यत्त्व ब्रूषे जगद्धात्रि करिष्ये तद्वचस्तव ।
ममापीष्टं प्रयच्छस्व प्रसीद परमेश्वरि ॥

देवि प्रत्यक्षतो रूप द्रष्टुमिच्छाम्यह तव ।
शक्तिस्त्वं लोकजननी त्वा नमामि प्रसीद मे ।।
इति तस्य वच. श्रुत्वा जनकस्य तदा क्षिति ।।
मुनीना सनिधौ रूप दर्शयामास भूभृते ।।
नीलोत्पलदलश्यामामक्षमालाब्जधारिणीम् ।
बाहुयुग्मेन शुभ्रेण मृणालायतशोभिना ।
सुन्दरी लोकधात्री ता दृष्ट्वा शश्वन्नृपोऽनमत् ।।
तत सा पृथिवी देवी सीता जाता नृपात्मजाम् ।
करेण शश्वत्सस्पृश्य वचन चेदमब्रवीत् ।।
इयं ते मानुषं भावमवाप्स्यति जगत्प्रसूः ।
तव पुत्री नृपश्रेष्ठ समयं प्रतिपालय ।।

मार्कण्डेय उवाच ।

इत्युक्त्वा पृथिवी देवी राजान जनकाह्वयम् ।
सभाष्य नारदादीस्तास्तत्रैवान्तरधीयत ।।
जनकोऽपि सुता लब्ध्वा सर्वलक्षणशालिनीम् ।
सुतद्वय तथा प्राप्य मुदित॰ स्वगृह ययौ ।।
तत काले तु सप्राप्ते रावणे राक्षसे हते ।
मानुषेण स्वरूपेण विप्णुना प्रभविष्णुना ।।
गत्वा विदेहाराजस्य यज्ञभूमि तदा क्षिति : ।
सुषुवे तनय वीर यत्र सीता पुराभवत् ।।
जाते पुत्रे तदा देवी जगद्धात्री जगत्प्रभुम् ।
सस्मार समये विष्णु स्मरन्ती समय पुरा ।।
स्मृतमात्रस्तदा देव. समय प्रत्यपालयत् ।
क्षितेर्यत्र सुतो जातस्तत्र प्रादुर्बभूव ह ।।
प्रादुर्भूत तदा देवी प्रणम्य परमेश्वरम् ।
सस्तूय सुनृतं शश्वदिदमाह जगत्प्रभुम् ।।

पृथिव्युवाच ।

एष ते तनयो जातः सुकुमारो महाप्रभः ।
सस्मरन्समय पूर्वं त्वमेन प्रतिपालय ।।

श्रीभगवानुवाच ।

अय ते तनयो देवी महाबलपराक्रम. ।
भविता मानुष भाव तन्वान. सुचिर बुधः ।।
यावन्मानुषभावं ते तनयो भावयिष्यति ।
तावत्कल्याणभाग्भूत्वा चिर राज्य करिष्यति ।।
त्यक्तमानुषभावस्तु यदा चाय विचेष्टते ।
तदा तु नास्य सुचिर जीवित संभविष्यति ।।
संप्राप्ते षोडशे वर्षे राज्यमासादयिष्यति ।
धनरत्नगजैश्वर्ययुक्तोऽयं रथसचयैः ।
आसाद्य महती नित्यां श्रिय भोक्ष्यति वीर्यवान् ।।
यस्मिन्यस्मिन्युगे भावो यो वा भवति वै नृणाम् ।
तं तं भावं तथैवाय करिष्यति तथा कुरु ।।
एतस्य निभृतं राज्य यत्प्राग्ज्योतिषसज्ञकम् ।
पुर तत्र चिरं शास्ता राज्यमेष सुतस्तव ।।
इत्युक्त्वा पृथिवी विष्णुः समाभाष्य जगत्पति. ।
दृश्यमानस्तया क्षिप्र तत्रैवान्तर्दधे प्रभु ।।
प्रसूय पृथिवी पुत्र मध्यरात्रे महाद्युतिम् ।
जनक ज्ञापयामास रहस्य पूर्वमीरितम् ।।
विदेहराजो ज्ञात्वैव पृथिवीजनित सुतम् ।
तत्रैव यज्ञवाटं स रात्रावागात्कृतक्रिय ।।
गच्छन्तं यज्ञवाटं तं दृष्ट्वा सर्वंसहा तदा ।
नोक्त्वा किंचन त शश्वदन्तर्धान गता नृपम् ।।
अथ गत्वा तदा तत्र विदेहाधिपतिः सुतम् ।
धरायां ददृशे कान्त्या चन्द्रार्कज्वलनोपमम् ।।
रुदन्तं बहुश. स्निग्ध चलद्धस्तपदद्वयम् ।
वपुष्मन्त श्रिया दीप्त कार्तिकेयमिवापरम् ।।
उद्गच्छन्स रुदन्बालो यज्ञभूमिं व्यतीत्य च ।
कियद्दूर जगामाशूत्तानशायी महाद्युति. ।।
मनुष्यस्य शिरस्तत्र मृतस्य प्राप्य बालकः ।
स्वशिरस्तत्र विन्यस्य रुदंस्तस्थौ क्षणं तदा ।।

ततो विदेहराजोऽपि मार्गमाण क्षिते सुतम् ।
व्यतीत्य यज्ञभूमिं तमाससादाञ्जसा बहि. ।।
आसाद्य बालक दीप्त प्रदीप्तमिव पावकम् ।
कान्त्या चन्द्रमसस्तुल्य तेजोभिर्भास्करोपमम् ।।
शरमध्यगत पूर्वं पावकिं पावको यथा ।
स्वय जग्राह त राजा पृथिव्या समय स्मरन् ।।
उद्गृह्णस्तच्छिरोदेशे ददृशे मानुप शिर. ।
शशास चाचिर शीर्षं मानुप गौतमाय स. ।।
अथ बाल समादाय प्रविश्यान्त पुर स्वकम् ।
महिष्यै कथयामास प्राप्त पुत्र गुहोपमम् ।।
सा त दृष्ट्वा विशालाक्ष सिहस्कन्ध महाभुजम् ।
विस्तीर्णहृदय कान्त नीलोत्पलदलच्छविम् ।
मुमोद पालनीयोऽय मयेति न्यवदन्नृपम् ।।
ता राजापि तत. प्राह पुत्रोऽय मम सुन्दरि ।
यज्ञभूमौ समुत्पन्नः स्वच्छन्द पाल्यतामयम् ।।
यत्पृथिव्या रह प्रोक्त न तद्देव्यै न्यवेदयत् ।
सत्यसधो नृपश्रेष्ठ प्रियाया अपि भाषितम्
मम सुतसुतवशान्पालयित्री धरेय-
मिति नरपतिवर्यो मोदवास्तद्दिने च ।
सुरतनयसमान पुत्रमासाद्य देवी
जितरिपुरतिधीमान्स्यादय चेत्यमोदत् ।।